**सुमन्त्रः**—इयं तत्रभवतो लक्ष्मणस्य जननी देवी सुमित्रा ।

**भरतः**—अम्ब, लक्ष्मणेन अतिसन्धितोऽहमभिवादये ।

**सुमित्रा**—[1]जात, यशोभागी भव ।

**भरतः**—अम्ब, इदं प्रयतिष्ये । अनुगृहीतोऽस्मि । ततस्ततः ।

**सुमन्त्रः**—इयं ते जननी ।

**भरतः**—(सरोषमुत्थाय) आः पापे,

**मम मातुश्च मातुश्च मध्यस्था त्वं न शोभसे ।**
**गङ्गायमुनयोर्मध्ये कुनदीव प्रवेशिता ॥ १६ ॥**

**कैकेयी**—[2]जात, किं मया कृतम् ।

---

the blessing. And then?

*Sumantra.* Here is the honoured Lakshmaṇa's mother, Queen Sumitrā.

*Bharata.* Mother, outwitted by Lakshmaṇa, I salute.

*Sumitrā.* Child, get fame.

*Bharata.* Mother, I will try for it. I have your blessings. And then?

*Sumantra.* Here is your mother.

*Bharata.* *(Indignantly rising)* Ah sinner,

Standing between my mother and mother, you are ill-suited like a foul stream inserted in the midst of the Gaṅgā and the Yamunā. (16)

*Kaikeyī.* Child, what have I done?

---

१. जाद जसोभाई होहि । २. जाद किं मए किदं ।



**भरतः**—किं कृतमिति वदसि ।

**वयमयशसा चीरेणार्यो नृपो गृहमृत्युना**
**प्रततरुदितैः कृत्स्नायोध्या मृगैः सह लक्ष्मणः ।**
**दयिततनयाः शोकेनाम्बाः स्नुषाध्वपरिश्रमै-**
**र्धिगिति वचसा चोग्रेणात्मा त्वया ननु योजिताः ॥१७**

**कौसल्या**—[1]जात, सर्वसमुदाचारमध्यस्थः किं न वन्दसे मातरम् ।

**भरतः**—मातरमिति । अम्ब, त्वमेव मे माता । अम्ब, अभिवादये ।

**कौसल्या**—[2]नहि नहि । इयं ते जननी ।

**भरतः**—आसीत् पुरा । न त्विदानीम् । पश्यतु भवती,

---

*Bharata.* You say, 'What have I done?'

We have been joined by you with infamy, the noble brother with the bark-cloth, the king with death imposed at home, the entire Ayodhyā with ceaseless tears, Lakshmaṇa with the beasts, the mothers fond of their sons with grief, the daughter-in-law with the toils of journey, and your own self with the carping word of fie (shame). (17)

*Kausalyā.* Child, being an observer of etiquette in full, why don't you salute your mother?

*Bharata.* 'Mother?' Madam, you are my mother. I salute you, mother.

*Kausalyā.* No, no. Here is your mother.

*Bharata.* She was formerly, not now. Madam,

---

१. जाद, सव्वसमुदाआरमज्झत्थो किं ण वन्दसि मादरं ।

२. णहि णहि । इअं दे जणणी ।

त्यक्त्वा स्नेहं शीलसंक्रान्तदोषैः पुत्रास्तावन्नन्वपुत्राः क्रियन्ते ।
लोकेऽपूर्वं स्थापयाम्येष धर्मं भर्तृद्रोहादस्तु माताप्यमाता ॥ १८

कैकेयी—[1]जात, महाराजस्य सत्यवचनं रक्षन्त्या मया तथोक्तम् ।

भरतः—किमिति किमिति ।

कैकेयी—[2]पुत्रको मे राजा भवत्विति ।

भरतः—अथ स इदानीमार्योऽपि भवत्याः कः ।

पितुर्मे नौरसः पुत्रो न क्रमेणाभिषिच्यते ।
दयिता भ्रातरो न स्युः प्रकृतीनां न रोचते ॥ १९ ॥

see—

Regardless of affection, sons, when stigma attaches to their character, are disowned as sons. I establish this new rule in the world—By treachery to her lord a mother shall also be no mother. (18)

*Kaikeyī.* Child, child, I did so to keep the king true to his word.

*Bharata.* What word?

*Kaikeyī.* That my son should be the king.

*Bharata.* Then what is my noble brother to you?

Is he no legitimate son of my father? Is he not consecrated according to hereditary succession? Are not his brothers loved of him? Is he not liked by his subjects? (19)

१. जाद, महाराअस्स सच्चवअणं रक्खन्तीए मए तह उत्तं ।
२. पुत्तओ मे राजा होदु त्ति ।



कैकेयी—[1]जात, शुल्कलुब्धा ननु प्रष्टव्या ।

भरतः—

वल्कलैर्हृतराजश्रीः पदातिः सह भार्यया ।
वनवासं त्वयाज्ञप्तः शुल्केऽप्येतदुदाहृतम् ॥ २० ॥

कैकेयी—[2]जात, देशकाले निवेदयामि ।

भरतः—

अयशसि यदि लोभः कीर्तयित्वा किमस्मान्
किमु नृपफलतर्षः किं नरेन्द्रो न दद्यात् ।
अथ तु नृपतिमातेत्येष शब्दस्तवेष्टो
वदतु भवति सत्यं किं तवार्यो न पुत्रः ॥ २१ ॥

*Kaikeyī.* Child, is it a question to be put to one who claims her bride's price?

*Bharata.* He has been ordered by you for life in forest, clad in tree-bark, stripped of his kingdom, walking on foot with his wife. Was it also stipulated in the bride's price? (20)

*Kaikeyī.* Child, I shall let you know at the proper hour.

*Bharata.* If you court infamy, why do you drag in our name? If you are greedy of the fruits of sovereignty, what will not the king give you? If you have a fancy for the appellation of king's mother, speak truly, madam, is not my noble brother also your son? (21)

१. जाद सुक्कलुद्धा णणु पुच्छिदव्वा । २. जाद देसकाले णिवेदेमि ।

कष्टं कृतं भवत्या ।

त्वया राज्यैषिण्या नृपतिरसुभिर्नैव गणितः
सुतं ज्येष्ठं च त्वं व्रज वनमिति प्रेषितवती ।
न शीर्णं यद् दृष्ट्वा जनकतनयां वल्कलवती-
महो धात्रा सृष्टं भवति हृदयं वज्रकठिनम् ॥ २२ ॥

सुमन्त्रः—कुमार, एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य भवन्तं प्रत्युद्गतौ विज्ञापयतः ।

गोपहीना यथा गावो विलयं यान्त्यपालिताः ।
एवं नृपतिहीना हि विलयं यान्ति वै प्रजाः ॥ २३ ॥

भरतः—अनुगच्छन्तु मां प्रकृतयः ।

---

Miserable is your deed.

Greedy of power, you cared little for the king's life. You sent your eldest son, bidding him go to the forest. At the sight of Janaka's daughter clad in tree-bark your heart did not break. Alas! A heart so hard as adamant has been made by the Creator. (22)

*Sumantra.* Prince, here Vasishṭha and Vāmadeva along with the subjects have come to greet you in view of your coronation and send word thus—

As cows that had lost their cowherd go to ruin, unprotected, so do the people destitute of their ruler go to ruin. (23)

*Bharata.* Let the subjects follow me.



सुमन्त्रः—अभिषेकं विसृज्य क भवान् यास्यति ।

भरतः—अभिषेकमिति । इहात्रभवत्यै प्रदीयताम् ।

सुमन्त्रः—क भवान् यास्यति ।

भरतः—

तत्र यास्यामि यत्रासौ वर्तते लक्ष्मणप्रियः ।
नायोध्या तं विनायोध्या सायोध्या यत्र राघवः ॥ २४ ॥

(निष्क्रान्ताः सर्वे ।)

तृतीयोऽङ्कः ।

---

*Sumantra.* Where do you wish to go, leaving the coronation?

*Bharata.* 'Coronation?' Let it be given to her ladyship.

*Sumantra.* Where do you wish to go?

*Bharata.* I will go to that place where the one fond of Lakshmaṇa remains. Ayodhyā is no Ayodhyā without him. That is Ayodhyā where there is Rāghava. (24)

*(Exeunt Omnes)*

The End of the Third Act.

# चतुर्थोऽङ्कः ।

( ततः प्रविशतश्चेट्यौ । )

**विजया**—[1]हला नन्दिनिके, भण भण । अद्य कौसल्यापुरोगैः सर्वैरन्तःपुरैः प्रतिमागेहं द्रष्टुं गतैस्तत्र किल भर्तृदारको भरतो दृष्टः । अहं च मन्दभागा द्वारे स्थिता ।

**नन्दिनिका**—[2]हला, दृष्टोऽस्माभिः कौतूहलेन भर्तृदारको भरतः ।

**विजया**—[3]भट्टिनी कुमारेण किं भणिता ।

## ACT THE FOURTH

*(Enter* two servant-maids)

*Vijayā.* Friend Nandinikā, to-day when all the ladies of the harem headed by Kausalyā went to see the statue-gallery, Prince Bharata was seen by them there. Isn't it? Unfortunately I had to wait at the gate.

*Nandinikā.* Friend, prince Bharata was seen by us with zeal.

*Vijayā.* What did the prince say to our mistress?

---

१. हला णन्दिणिए, भणेहि भणेहि । अज्ज कोसल्लापुरोगेहि सव्वेहि अन्तेउरेहि पडिमागेहं दट्ठुं गदेहि तहिं किळ भट्टिदारओ भरदो दिट्ठो । अहं च मन्दभाआ दुवारे ट्ठिदा ।

२. हळा दिट्ठो अह्मेहि कोदूहळेण भट्टिदारओ भरदो ।

३. भट्टिणी कुमारेण किं भणिदा ।



**नन्दिनिका**—[1]किं भणितम् । अवलोकितुमपि नेच्छति कुमारः ।

**विजया**—[2]अहो अत्याहितम् । राज्यलुब्धया भर्तृदारकस्य रामस्य राज्यविभ्रष्टं कुर्वत्यात्मनो वैधव्यमादिष्टम् । लोकोऽपि विनाशं गमितः । निर्घृणा खलु भट्टिनी । पापकं कृतम् ।

**नन्दिनिका**—[3]हला, शृणु । प्रकृतिभिरानीतमभिषेकं विसृज्य रामतपोवनं गतः कुमारः ।

**विजया**—(सविषादं) [4]हम् । एवं गतः कुमारः । नन्दिनिके, एह्यावां भट्टिनीं पश्यावः ।

( निष्क्रान्ते । )

**प्रवेशकः ।**

---

*Nandinikā.* What said? The prince doesn't even wish to see her.

*Vijayā.* Grave indeed. By causing Prince Rāma's dethronement in her lust for power, she has decreed widowhood on herself. The world too has been brought to ruin. Ruthless indeed is our mistress. She has sinned.

*Nandinikā.* Friend, hear. The prince has gone to Rāma's penance-forest, rejecting the coronation offered by his subjects.

---

१. किं भणिदं । ओलोइदुं वि णेच्छदि कुमारो ।

२. अहो अच्चाहिदम् । रज्जलुद्धाए भट्टिदारअस्स रामस्स रज्जविब्भट्ठं करन्तीए अत्तणो वेहव्वं आदिट्ठं । लोओ वि विणासं गमिओ । णिग्घिणा हु भट्टिणी । पावअं किदं ।

३. हळा सुणाहि । पइदीहि आणीदं अभिसेअं विसज्जिअ रामतवोवणं गदो कुमारो ।

४. हम् । एवं गदो कुमारो । णन्दिणिए एहि अह्म भट्टिणिं पेक्खामो ।

( ततः प्रविशति भरतो रथेन सुमन्त्रः सूतश्च । )

भरतः—

स्वर्गं गते नरपतौ सुकृतानुयात्रे
पौराश्रुपातसलिलैरनुगम्यमानः ।
द्रष्टुं प्रयाम्यकृपणेषु तपोवनेषु
रामाभिधानमपरं जगतः शशाङ्कम् ॥ १ ॥

सुमन्त्रः—एष एष आयुष्मान् भरतः ।

दैत्येन्द्रमानमथनस्य नृपस्य पुत्रो
यज्ञोपयुक्तविभवस्य नृपस्य पौत्रः ।
भ्राता पितुः प्रियकरस्य जगत्प्रियस्य
रामस्य रामसदृशेन पथा प्रयाति ॥ २ ॥

---

*Vijayā.* *(Sorrowfully)* So the prince has gone. Nandinikā, come. Let us meet our mistress.

*(Exeunt Both)*

INTERLUDE.

*(Enter* Bharata *on a chariot and* Sumantra and the Charioteer)

*Bharata.* When the king has gone to Heaven escorted by his virtuous deeds in the rear, I set out followed by the tears of citizens into the sublime woods of penance to see the second moon on earth called Rāma. (1)

*Sumantra.* Son of the king that subdued the pride of lordly demons, grandson of the king that spent his wealth on sacrifices and brother of Rāma, the



भरतः—भोस्तात ।

सुमन्त्रः—कुमार, अयमस्मि ।

भरतः—क्व तत्रभवान् ममार्यो रामः । कासौ महाराजस्य प्रतिनिधिः । क्व सन्निदर्शनं सारवताम् । कासौ प्रत्यादेशो राज्यलुब्धायाः कैकेय्याः । क्व तत् पात्रं यशसः । कासौ नरपतेः पुत्रः । कासौ सत्यमनुव्रतः ।

मम मातुः प्रियं कर्तुं येन लक्ष्मीर्विसर्जिता ।
तमहं द्रष्टुमिच्छामि दैवतं परमं मम ॥ ३ ॥

सुमन्त्रः—कुमार, एतस्मिन्नाश्रमपदे ।

अत्र रामश्च सीता च लक्ष्मणश्च महायशाः ।
सत्यं शीलं च भक्तिश्च येषु विग्रहवत् स्थितम् ॥ ४ ॥

---

darling of the world that did the pleasure of his father, this Bharata, may he live long, goes the way in keeping with Rāma. (2)

*Bharata.* Father.

*Sumantra.* Prince, here I am.

*Bharata.* Where is my revered noble brother Rāma? Where is that representative of the king? Where is the ideal example of rich stores? Where is that antithesis of Kaikeyī thirsting for power? Where is that receptacle of fame? Where is that prince? Where is the one pledged to truth?

I wish to see him who gave up his wealth to please my mother. He is my supreme deity. (3)

*Sumantra.* Prince, in this hermitage.

**भरतः**—तेन हि स्थाप्यतां रथः ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । (तथा करोति । )

**भरतः**—(रथादवतीर्य) सूत, एकान्ते विश्रामयाश्वान् ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । (निष्क्रान्तः । )

**भरतः**—भोस्तात, निवेद्यतां निवेद्यताम् ।

**सुमन्त्रः**—कुमार, किमिति निवेद्यते ।

**भरतः**—राज्यलुब्धायाः कैकेय्याः पुत्रो भरतः प्राप्त इति ।

**सुमन्त्रः**—कुमार, अलं गुरुजनापवादमभिधातुम् ।

**भरतः**—सुष्ठु, न न्याय्यं परदोषमभिधातुम् । तेन हि उच्यतामिक्ष्वाकुकुलव्यङ्गभूतो भरतो दर्शनमभिलषतीति ।

---

Here are Rāma and Sītā and the famous Lakshmaṇa in whom truth, character and devotion seem to stand in embodiment. (4)

*Bharata.* Then stop the chariot.

*Charioteer.* As Your Honour bids. *(Does so)*

*Bharata.* *(Dismounting from the chariot)* Driver, rest the horses in a secluded place.

*Charoiteer.* As Your Honour bids. [*Exit*

*Bharata.* Father, please announce.

*Sumantra.* Prince, what to announce?

*Bharata.* That Bharata, the son of Kaikeyī, greedy of power, has arrived.

*Sumantra.* Prince, don't speak a slander of elders.

*Bharata.* Well, it is not proper to expose the faults of another. Then tell that Bharata, the curse of Ikshvāku's line, seeks an interview.



**सुमन्त्रः**—कुमार, नाहमेवं वक्तुं समर्थः । अथ पुनर्भरतः प्राप्त इति ब्रूयाम् ।

**भरतः**—न न । नाम केवलमभिधीयमानमकृतप्रायश्चित्तमिव मे प्रतिभाति । किं ब्रह्मघ्नानामपि परेण निवेदनं क्रियते । तस्मात् तिष्ठतु तातः । अहमेव निवेदयिष्ये । भो भो! निवेद्यतां निवेद्यतां तत्रभवते पितृवचनकराय राघवाय—

**निर्घृणश्च कृतघ्नश्च प्राकृतः प्रियसाहसः ।**
**भक्तिमानागतः कश्चित् कथं तिष्ठतु यात्विति ॥ ५ ॥**

(ततः प्रविशति रामः सीतालक्ष्मणाभ्याम् ।)

**रामः**—(आकर्ण्य सहर्षं) सौमित्रे, किं शृणोषि । अयि विदेहराजपुत्रि, त्वमपि शृणोषि ।

---

*Sumantra.* Prince, I won't be able to say so. I would merely say—Bharata has come.

*Bharata.* No, no. The mere mention of name would fail to suggest an expiation. Is the announcement of persons guilty of Brahmin-slaughter to be made by another? So stop, father. I shall myself announce. Eh! Be it announced to the revered Rāghava that did the bidding of his father—

'Cruel, ungrateful, low-bred, reckless but imbued with devotion, some one has come. Is he to stay or go away? (5)

*(Enter* Rāma *with* Sītā *and* Lakshmaṇa)

*Rāma.* *(Listening, with joy)* Saumitri, do you hear? Videha princess, you too hear?

कस्यासौ सदृशतरः स्वरः पितुर्मे
गाम्भीर्यात् परिभवतीव मेघनादम् ।
यः कुर्वन् मम हृदयस्य बन्धुशङ्कां
सस्नेहः श्रुतिपथमिष्टतः प्रविष्टः ॥ ६ ॥

लक्ष्मणः—आर्य, ममापि खल्वेष स्वरसंयोगो बन्धुजनबहुमानमावहति । एष हि,

घनः स्पष्टो धीरः समदवृषभस्निग्धमधुरः
कलः कण्ठे वक्षस्यनुपहतसंचाररभसः ।
यथास्थानं प्राप्य स्फुटकरणनानाक्षरतया
चतुर्णां वर्णानामभयमिव दातुं व्यवसितः ॥ ७ ॥

रामः—सर्वथा नायमबान्धवस्य स्वरसंयोगः । क्लेदयतीव मे हृदयम् । वत्स लक्ष्मण, दृश्यतां तावत् ।

---

Whose is this voice so similar to my father's which in deep resonance puts to shame the thunder of clouds? Rousing the surmise in my heart that he is a kinsman, it enters the range of my ears easily with affinity. (6)

*Lakshmaṇa.* Noble brother, the tone of this voice inspires me too with esteem as for a kinsman.

Loud, clear and steady, charming and pleasant like the bellow of a proud ox, melodius at the throat, flowing easy through the chest with a clear and accurate articulation of the different letters, this voice seems resolute to give protection from fear to all the four castes. (7



लक्ष्मणः—यदाज्ञापयत्यार्यः । ( परिक्रामति । )

भरतः—अये, कथं न कश्चित् प्रतिवचनं प्रयच्छति । किंनु खलु विज्ञातोऽस्मि कैकेय्याः पुत्रो भरतः प्राप्त इति ।

लक्ष्मणः—(विलोक्य) अये अयमार्यो रामः । न न । रूपसादृश्यम् ।

मुखमनुपमं त्वार्यास्याभं शशाङ्कमनोहरं
मम पितृसमं पीनं वक्षः सुरारिशरक्षतम् ।
द्युतिपरिवृतस्तेजोराशिर्जगत्प्रियदर्शनो
नरपतिरयं देवेन्द्रो वा स्वयं मधुसूदनः ॥ ८ ॥

( सुमन्त्रं दृष्ट्वा ) अये तातः ।

---

*Rāma.* In any event it is no voice of a stranger. It seems to ooze my heart. Dear Lakshmaṇa, just find out.

*Lakshmaṇa.* As my noble brother commands. *(Walks about)*

*Bharata.* Eh! Nobody gives a reply. Am I known that I am Kaikeyī's son Bharata arrived?

*Lakshmaṇa.* *(Seeing)* Eh! This is my noble brother Rāma. No, no. It is only a likeness of form.

His matchless countenance resembles my brother's, charming like the Moon. His broad chest resembles my father's, scarred by the arrows of demons. A heap of lustre surrounded by a halo sweet to look at for all the world! Is this ruler the king of gods? Or is he Madhu's slayer himself? (8)

*(Looking at Sumantra)* Eh father!

सुमन्त्रः—अये, कुमारो लक्ष्मणः ।

भरतः—एवं, गुरुरयम् । आर्य, अभिवादये ।

लक्ष्मणः—एह्येहि । आयुष्मान् भव । ( सुमन्त्रं वीक्ष्य ) तात, कोऽत्रभवान् ।

सुमन्त्रः—कुमार,

रघोश्चतुर्थोऽयमजात् तृतीयः पितुः प्रकाशस्य तव द्वितीयः ।
यस्यानुजस्त्वं स्वकुलस्य केतोस्तस्यानुजोऽयं भरतः कुमारः ॥९॥

लक्ष्मणः—एह्येहीक्ष्वाकुकुमार । वत्स स्वस्ति । आयुष्मान् भव ।

असुरसमरदक्षैर्वज्रसंघृष्टचापै-
रनुपमबलवीर्यैः स्वैः कुलैस्तुल्यवीर्यः ।

---

*Sumantra.* Prince Lakshmaṇa!

*Bharata.* So he is my senior. Sir, I salute.

*Lakshmaṇa.* Come, come. May you live long. *(Looking at Sumantra)* Father, who is this esteemed person?

*Sumantra.* Prince,

Fourth from Raghu, third from Aja and the second among the sons of your renowned father, he is prince Bharata. He is the next brother of that banner of his race, of whom you are the junior brother. (9)

*Lakshmaṇa.* Come, come, Ikshvāku prince. Child, may you live long and happy.

Equal in valour to your predecessors of unparalleled might and prowess, veterans at battles with



रघुरिव स नरेन्द्रो यज्ञविश्रान्तकोशो
भव जगति गुणानां भाजनं भ्राजितानाम् ॥ १० ॥

भरतः—अनुगृहीतोऽस्मि ।

लक्ष्मणः—कुमार, इह तिष्ठ । त्वदागमनमार्याय निवेदयामि ।

भरतः—आर्य, अचिरमिदानीमभिवादयितुमिच्छामि । शीघ्रं निवेद्यताम् ।

लक्ष्मणः—बाढम् । (उपेत्य) जयत्वार्यः । आर्य,

अयं ते दयितो भ्राता भरतो भ्रातृवत्सलः ।
संक्रान्तं यत्र ते रूपमादर्शे इव तिष्ठति ॥ ११ ॥

रामः—वत्स लक्ष्मण, किमेवं भरतः प्राप्तः ।

---

demons, whose bows rubbed against the thunderbolts, may you, like that king Raghu whose treasures were exhausted in the sacrifice, be a receptacle of shining qualities in the world. (10)

*Bharata.* I accept your blessings.

*Lakshmaṇa.* Prince, stay here. I shall announce your arrival to our noble brother.

*Bharata.* Noble brother, I would like to salute him at once. Inform him quickly.

*Lakshmaṇa.* Well. *(Going near)* Greetings to my noble brother. Sir,

Here is your dear brother Bharata fond of his brothers, in whom your person seems reflected as in a mirror. (11)

*Rāma.* Dear Lakshmaṇa, so Bharata has come?

**लक्ष्मणः**—आर्य, अथकिम् ।

**रामः**—मैथिलि, भरतावलोकनार्थं विशालीक्रियतां ते चक्षुः ।

**सीता**—[1]आर्यपुत्र, किं भरत आगतः ।

**रामः**—मैथिलि, अथकिम् ।

**अद्य खल्ववगच्छामि पित्रा मे दुष्करं कृतम् ।**
**कीदृशस्तनयस्नेहो भ्रातृस्नेहोऽयमीदृशः ॥ १२ ॥**

**लक्ष्मणः**—आर्य, किं प्रविशतु कुमारः ।

**रामः**—वत्स लक्ष्मण, इदमपि तावदात्माभिप्रायमनुवर्तयितुमिच्छसि । गच्छ, सत्कृत्य शीघ्रं प्रवेश्यतां कुमारः ।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः ।

**रामः**—अथवा तिष्ठ त्वम् ।

---

*Lakshmaṇa.* Yes, sir.

*Rāma.* Mithilā princess, widen your eyes for seeing Bharata.

*Sītā.* My lord, Bharata has come?

*Rāma.* Yes, Mithilā princess.

Now indeed do I realise how hard a thing my father did. What will be the nature of love for a son when love for a brother is such! (12)

*Lakshmaṇa.* Noble brother, can the prince enter?

*Rāma.* Dear Lakshmaṇa, here too you await my pleasure? Go, honour and admit the prince soon.

*Lakshmaṇa.* As my noble brother commands.

*Rāma.* Or rather, stop.

---

१. अय्यउत्त किं भरदो आअदो ।



**इयं स्वयं गच्छतु मानहेतोर्मातेव भावं तनये निवेश्य ।**
**तुषारपूर्णोत्पलपत्रनेत्रा हर्षास्रमासारमिवोत्सृजन्ती ॥ १३ ॥**

**सीता**—[1]यदार्यपुत्र आज्ञापयति । (उत्थाय परिक्रम्य भरतमवलोक्य) हं ततस्तां वेलामिदानीं निष्क्रान्त आर्यपुत्रः । नहि नहि । रूपसादृश्यम् ।

**सुमन्त्रः**—अये वधूः ।

**भरतः**—अये इयमत्रभवती जनकराजपुत्री ।

**इदं तत् स्त्रीमयं तेजो जातं क्षेत्रोदराद्धलात् ।**
**जनकस्य नृपेन्द्रस्य तपसः सन्निदर्शनम् ॥ १४ ॥**

---

Let the princess herself go to honour him and show her affection for him as a mother for her son, releasing a stream of tears and thus likening her eyes to blue lotus-petals filled with dew. (13)

*Sītā.* As my lord commands. *(Rising, walking about and looking at Bharata)* Ah, my lord has come out in the meanwhile. No, no. Only a similarity of features.

*Sumantra.* Eh! Daughter-in-law!

*Bharata.* Eh! Here is the revered daughter of King Janaka.

Here is that lustre taken the form of a woman, sprung from the plough at the womb of the earth, the ideal exhibition of the penance of King Janaka. (14)

---

१. जं अय्यउत्तो आणवेदि । (उत्थाय परिक्रम्य भरतमवलोक्य) हं तदो तं वेळं दाणि णिक्कन्तो अय्यउत्तो । णहि णहि । रूवसादिस्सं ।

आर्ये, अभिवादये । भरतोऽहमस्मि ।

सीता—(आत्मगतं) [1]नहि रूपमेव । स्वरयोगोऽपि स एव । (प्रकाशं) वत्स, चिरं जीव ।

भरतः—अनुगृहीतोऽस्मि ।

सीता—[2]एहि वत्स । भ्रातृमनोरथं पूरय ।

सुमन्त्रः—प्रविशतु कुमारः ।

भरतः—तात, इदानीं किं करिष्यसि ।

सुमन्त्रः—

अहं पश्चात् प्रवेक्ष्यामि स्वर्गं याते नराधिपे ।
विदितार्थस्य रामस्य ममैतत्पूर्वदर्शनम् ॥ १५ ॥

भरतः—एवमस्तु । ( राममुपगम्य ) आर्य, अभिवादये भरतोऽहमस्मि ।

---

Madam, I salute. Bharata I am.

*Sītā. (To herself)* Not only the person, the voice too is the same. *(Aloud)* Child, may you live long.

*Bharata.* I thank you.

*Sītā.* Come, boy, fulfil your brother's desire.

*Sumantra.* Let the prince enter.

*Bharata.* Father, what are you going to do?

*Sumantra.* I shall enter behind. After the king went to heaven this is the first time that I see Rāma when he has learnt the news. (15)

---

1. णहि रूवं एव्व । सरजोओ वि सो एव्व । (प्रकाशं) वच्छ चिरं जीव ।
2. एहि वच्छ । भादुमणोरहं पूरेहि ।



रामः—(सहर्षं) एह्येहि इक्ष्वाकुकुमार । स्वस्ति । आयुष्मान् भव ।

वक्षः प्रसारय कवाटपुटप्रमाण-
मालिङ्ग मां सुविपुलेन भुजद्वयेन ।
उन्नामयाननमिदं शरदिन्दुकल्पं
प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥ १६ ॥

भरतः—अनुगृहीतोऽस्मि ।

सुमन्त्रः—( उपेत्य ) जयत्वायुष्मान् ।

रामः—हा तात ।

गत्वा पूर्वं स्वसैन्यैरभिसरिसमये खं समानैर्विमानै-
र्विख्यातो यो विमर्दे स स इति बहुशः सासुराणां सुराणाम् ।

---

*Bharata.* Be it so. *(Approaching Rāma)* Noble brother, I salute. I am Bharata.

*Rāma. (Joyfully)* Come, come, Ikshvāku prince. Weal unto you. May you live long.

Stretch wide your breast as broad as a door-panel and embrace me with both your mighty arms and lift your face resembling the autumn moon and delight my body burnt by tortures. (16)

*Bharata.* I thank you.

*Sumantra. (Drawing near)* Greetings, may you live long.

*Rāma.* Father,

A king there was that formerly went up to the sky along with his troops by aerial cars like those of celestials in offering aid to them and in the thick of

**स श्रीमांस्त्यक्तदेहो दयितमपि विना स्नेहवन्तं भवन्तं**
**स्वर्गस्थः सांप्रतं किं रमयति पितृभिः स्वैर्नरेन्द्रैर्नरेन्द्रः ॥ १७ ॥**

**सुमन्त्रः**—(सशोकं)

**नरपतिनिधनं भवत्प्रवासं भरतविषादमनाथतां कुलस्य ।**
**बहुविधमनुभूय दुष्प्रसह्यं गुण इव बह्वपराद्धमायुषा मे ॥ १८ ॥**

**सीता**—[1]रुदन्तमार्यपुत्रं पुनरपि रोदयति तातः ।

**रामः**—मैथिलि, एष पर्यवस्थापयाम्यात्मानम् । वत्स लक्ष्मण, आपस्तावत् ।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः ।

---

fight drew the attraction of all the gods and demons who pointed at him—'It is he. It is he'—and thus was famous. That glorious king having left his body, gone to heaven and remaining without you, dear and loving as you were to him, does he now delight in the company of his own kingly fathers? (17)

*Sumantra.* *(With sorrow)* The king's demise, your own exile, Bharata's grief and the helplessness of the family,—having experienced this varied unbearable suffering, my life has erred a good deal in its merit (longevity). (18)

*Sītā.* My lord already weeps, and father, you make him weep all the more.

*Rāma.* Mithilā princess, now I compose myself. Dear Lakshmaṇa, bring water.

*Lakshmaṇa.* As my noble brother commands.

---

१. रोदन्दं अय्यउत्तं पुणो वि रोदावीअदि तादो ।



**भरतः**—आर्य, न खलु न्याय्यम् । क्रमेण शुश्रूषयिष्ये । अहमेव यास्यामि । ( कलशं गृहीत्वा निष्क्रम्य प्रविश्य ) इमा आपः ।

**रामः**—(आचम्य) मैथिलि, विशीर्यते खलु लक्ष्मणस्य व्यापारः ।

**सीता**—[1]आर्यपुत्र, नन्वेतेनापि शुश्रूषयितव्यः ।

**रामः**—सुष्ठु खल्विह लक्ष्मणः शुश्रूषयतु । तत्रस्थो मां भरतः शुश्रूषयतु ।

**भरतः**—प्रसीदत्वार्यः ।

**इह स्थास्यामि देहेन तत्र स्थास्यामि कर्मणा ।**
**नाम्नैव भवतो राज्यं कृतरक्षं भविष्यति ॥ १९ ॥**

**रामः**—वत्स, कैकेयीमातः । मा मैवम् ।

---

*Bharata.* Noble brother, it is not proper. I will serve in the order of priority. I shall go myself. *(Taking a pitcher) (Exit and re-enter)* Here is water.

*Rāma.* *(Duly sipping)* Mithilā princess, Lakshmaṇa loses his job.

*Sītā.* My lord, you should be served by this one too.

*Rāma.* Indeed let Lakshmaṇa serve me well here. Let Bharata serve me from there.

*Bharata.* Be pleased, sir.

I will remain here in body and there in action. By the very mention of your name the realm will get protection. (19)

*Rāma.* Boy, Kaikeyī's son, no, not so.

---

१. अय्यउत्त णं एदिणा पि सुस्सूसइदव्वो ।

पितुर्नियोगादहमागतो वनं
न वत्स दर्पान्न भयान्न विभ्रमात् ।
कुलं च नः सत्यधनं ब्रवीमि ते
कथं भवान्नीचपथे प्रवर्तते ॥ २० ॥

**सुमन्त्रः**—अथेदानीमभिषेकोदकं क तिष्ठतु ।

**रामः**—यत्र मे मात्राभिहितं तत्रैव तावत्तिष्ठतु ।

**भरतः**—प्रसीदत्वार्यः । आर्य, अलमिदानीं व्रणे प्रहर्तुम् ।

अपि सुगुण ममापि त्वत्प्रसूतिः प्रसूतिः
स खलु निभृतधीमांस्ते पिता मे पिता च ।
सुपुरुष पुरुषाणां मातृदोषो न दोषो
वरद भरतमार्तं पश्य तावद्यथावत् ॥ २१ ॥

---

I have come to the woods at the bidding of my father, not in pride, nor through fear, nor under a mistake. Boy, truth is the wealth of our family. I say—Why are you in for treading a lowly path? (20)

*Sumantra.* Then where shall the water of consecration rest?

*Rāma.* Exactly where my mother has directed.

*Bharata.* Please, sir. Noble brother, don't strike at a wound.

Virtuous one, is not the source of your birth that of mine too? Your father of resolute purpose is also my father. Great man, the mother's fault is no fault of men. O giver of boons, look at the distressed Bharata in a proper light. (21)



**सीता**—[1]आर्यपुत्र, अतिकरुणं मन्त्रयते भरतः । किमिदानीमार्यपुत्रेण चिन्त्यते ।

**रामः**—मैथिलि,

तं चिन्तयामि नृपतिं सुरलोकयातं
येनायमात्मजविशिष्टगुणो न दृष्टः ।
ईदृग्विधं गुणनिधिं समवाप्य लोके
धिग् भो विधेर्यदि बलं पुरुषोत्तमेषु ॥ २२ ॥

वत्स कैकेयीमातः,

यत्सत्यं परितोषितोऽस्मि भवता निष्कल्मषात्मा भवां-
स्त्वद्वाक्यस्य वशानुगोऽस्मि भवतः ख्यातैर्गुणैर्निर्जितः ।
किन्त्वेतन्नृपतेर्वचस्तदनृतं कर्तुं न युक्तं त्वया
किं चोत्पाद्य भवद्विधं भवतु ते मिथ्याभिधायी पिता ॥ २३

---

*Sītā.* My lord, Bharata appeals so piteously. What is my lord thinking of?

*Rāma.* Mithilā princess,

I am thinking of that king gone to heaven who has not seen this best of his sons. Having got such a mine of virtues in the world for his son, Ah fie, if Destiny asserts its power against the best of men. (22)

Child, Kaikeyī's son,

Truly I am pleased with you. You are free from stain. I should yield to your words, won over by your renowned qualities. But it is not proper for you to

---

१. अय्यत्त, अदिकरुणं मन्तेअइ भरदो । किं दाणिं अय्यउत्तेण चिन्तीअदि ।

भरतः—

यावद् भविष्यति भवन्नियमावसानं
तावद् भवेयमिह ते नृप पादमूले ।

रामः—

मैवं नृपः स्वसुकृतैरनुयातु सिद्धिं
मे शापितो न परिरक्षसि चेत् स्वराज्यम् ॥ २४ ॥

भरतः—हन्त अनुत्तरमभिहितम् । भवतु समयतस्ते राज्यं परिपालयामि ।

रामः—वत्स, कः समयः ।

भरतः—मम हस्ते निक्षिप्तं तव राज्यं चतुर्दशवर्षान्ते प्रतिग्रहीतुमिच्छामि ।

---

make the king's words false. Further, having begot a son like you, is your father to become a liar? (23)

*Bharata.* Till you reach the end of your austerities, king, I will remain here at your feet.

*Rāma.* No, not so. Let the king realise the perfection of his virtues. You have my curse if you don't look after your realm. (24)

*Bharata.* Alas! Your speech leaves no room for an answer. Let it be. I shall administer your kingdom on an understanding.

*Rāma.* Child, what understanding?

*Bharata.* I would like you to take back your kingdom entrusted to my hands at the end of fourteen years.



रामः—एवमस्तु ।

भरतः—आर्य, श्रुतम् । आर्ये, श्रुतम् । तात, श्रुतम् ।

सर्वे—वयमपि श्रोतारः ।

भरतः—आर्य, अन्यमपि वरं हर्तुमिच्छामि ।

रामः—वत्स, किमिच्छसि । किमहं ददामि । किमहमनुष्ठास्यामि ।

भरतः—

पादोपभुक्ते तव पादुके म एते प्रयच्छ प्रणताय मूर्ध्ना ।
यावद्भवानेष्यति कार्यसिद्धिं तावद्भविष्याम्यनयोर्विधेयः॥२५॥

रामः—( स्वगतं ) हन्त भोः ।

सुचिरेणापि कालेन यशः किंचिन्मयार्जितम् ।
अचिरेणैव कालेन भरतेनाद्य संचितम् ॥ २६ ॥

---

*Rāma.* Be it so.

*Bharata.* Sir, did you hear? Madam, did you hear? Father, did you hear?

*All.* We have all heard.

*Bharata.* Noble brother, I should like to take one more boon.

*Rāma.* Child, what do you wish for? What shall I give you? What shall I do for you?

*Bharata.* Give these two sandals used by your feet to me as I bend down my head. Till you reach the end of your mission I shall be their slave. (25)

*Rāma.* *(Within)* Oh! Ho! What little fame was earned by me after long past has been earned by Bharata in a short while. (26)

**सीता**—[1]आर्यपुत्र, ननु दीयते खलु प्रथमयाचनं भरताय ।

**रामः**—तथास्तु । वत्स गृह्यताम् ।

**भरतः**—अनुगृहीतोऽस्मि । (गृहीत्वा) आर्य, अत्राभिषेकोदकमावर्जयितुमिच्छामि ।

**रामः**—तात, यदिष्टं भरतस्य तत् सर्वं क्रियताम् ।

**सुमन्त्रः**—यदाज्ञापयत्यायुष्मान् ।

**भरतः**—( आत्मगतं ) हन्त भोः

**श्रद्धेयः स्वजनस्य पौररुचितो लोकस्य दृष्टिक्षमः**
**स्वर्गस्थस्य नराधिपस्य दयितः शीलान्वितोऽहं सुतः ।**
**भ्रातॄणां गुणशालिनां बहुमतः कीर्तेर्महद्भाजनं**
**संवादेषु कथाश्रयो गुणवतां लब्धप्रियाणां प्रियः ॥ २७ ॥**

*Sītā.* My lord, I suppose the first request of Bharata will be granted.

*Rāma.* Be it so. Child, take it.

*Bharata.* I thank you. *(Taking)* Noble brother, I would like to pour the water of consecration on it.

*Rāma.* Father, let everything be done as Bharata likes.

*Sumantra.* As you bid. May you live long.

*Bharata.* *(Within)* Thank god.

I am now trustworthy for my kinsmen, liked by my subjects, fit to be seen by the world, a dear son of clean character to the king that has gone to heaven. Esteemed of my meritorious brothers, I am now a big

[1]. अय्यउत्त णं दीयदि खु पुढमजाअणं भरदस्स ।



**रामः**—वत्स कैकेयीमातः, राज्यं नाम मुहूर्तमपि नोपेक्षणीयम् । तस्मादद्यैव विजयाय प्रतिनिवर्ततां कुमारः ।

**सीता**—[1]हम् अद्यैव गमिष्यति कुमारो भरतः ।

**रामः**—अलमतिस्नेहेन । अद्यैव विजयाय प्रतिनिवर्ततां कुमारः ।

**भरतः**—आर्य, अद्यैवाहं गमिष्यामि ।

**आशावन्तः पुरे पौराः स्थास्यन्ति त्वद्दिदृक्षया ।**
**तेषां प्रीतिं करिष्यामि त्वत्प्रसादस्य दर्शनात् ॥ २८ ॥**

**सुमन्त्रः**—आयुष्मन्, मयेदानीं किं कर्तव्यम् ।

**रामः**—तात, महाराजवत् परिपाल्यतां कुमारः ।

storehouse of fame, an object of talk in the conversations of good men and a favourite of those who have reached their goal. (27)

*Rāma.* Child, Kaikeyī's son, a kingdom should not be neglected even for a moment. Hence, prince, return to-day itself to administer the kingdom.

*Sītā.* Oh, prince Bharata will go to-day itself?

*Rāma.* Enough, enough of over-attachment. Let the prince go back at once to rule the country.

*Bharata.* Noble brother, I will go to-day itself.

Filled with hopes, the citizens are waiting in the city, eager to see you. I will cause them pleasure by the exhibition of your favour. (28)

*Sumantra.* May you live long. What shall I do now?

*Rāma.* Father, look after the prince like the king.

[1]. हं अज्ज एव्व गमिस्सदि कुमारो भरदो ।

**सुमन्त्रः**—यदि जीवामि, तावत् प्रयतिष्ये ।

**रामः**—वत्स कैकेयीमातः, आरुह्यतां ममाग्रतो रथः ।

**भरतः**—यदाज्ञापयत्यार्यः ।

(रथमारोहतः ।)

**रामः**—मैथिलि, इतस्तावत् । वत्स लक्ष्मण, इतस्तावत् । आश्रमपदद्वारमात्रमपि भरतस्यानुयात्रं भविष्यामः ।

(इति निष्क्रान्ताः सर्वे ।)

**चतुर्थोऽङ्कः ।**

---

*Sumantra.* I shall strive if I am alive.

*Rāma.* Child, Kaikeyī's son, mount the chariot in my front.

*Bharata.* As my noble brother commands.

*(Both mount the chariot)*

*Rāma.* Maithilī, come here. Child Lakshmaṇa, come here. Let us escort him in the rear to the gate of the hermitage.

*(Exeunt Omnes)*

The End of the Fourth Act.

# पञ्चमोऽङ्कः ।

( ततः प्रविशति सीता तापसी च । )

**सीता**—[1]आर्ये, उपहारसुमनआकीर्णः संमार्जित आश्रमः । आश्रमपदविभवेनानुष्ठितो देवसमुदाचारः । तद्यावदार्यपुत्रो नागच्छति तावदिमान् बालवृक्षानुदकप्रदानेनानुक्रोशयिष्यामि ।

**तापसी**—[2]अविघ्नमस्य भवतु ।

( ततः प्रविशति रामः । )

**रामः**—( सशोकं )

---

ACT THE FIFTH.

*(Enter* Sītā *and* a Hermitess)

*Sītā.* Madam, the hermitage has been swept clean and strewn with flowers of offering. The worship of God has been done in keeping with the equipment of a hermitage. Before my lord comes I shall nurture these saplings with a supply of water.

*Hermitess.* Let there be no impediment.

*(Enter* Rāma)

*Rāma.* *(With sorrow)* After leaving that pleasant city of Ayodhyā bereft of my father and myself and

---

१. अय्ये उवहारसुमणाइण्णो सम्मज्जिदो अस्समो । अस्समपदविभवेण अणुट्ठिओ देवसमुदाआरो । ता जाव अय्यउत्तो ण आअच्छदि दाव इमाणं वाळरुक्खाणं उदअप्पदाणेण अणुक्कोसइस्सं । २. अविग्घं से होदु ।

त्यक्त्वा तां गुरुणा मया च रहितां रम्यामयोध्यां पुरी-
मुद्यम्यापि ममाभिषेकमखिलं मत्सन्निधावागतः ।
रक्षार्थं भरतः पुनर्गुणनिधिस्तत्रैव संप्रेषितः
कष्टं भो नृपतेर्धुरं सुमहतीमेकः समुत्कर्षति ॥ १ ॥

(विमृश्य) ईदृशमेवैतत् । यावदिदानीमीदृशशोकविनोदनार्थमवस्थाकुटुम्बिनीं मैथिलीं पश्यामि । तत् क नु खलु गता वैदेही । (परिक्रम्यावलोक्य) अये इमानि खलु प्रत्यग्राभिषिक्तानि वृक्षमूलानि अदूरगतां मैथिलीं सूचयन्ति । तथाहि ।

भ्रमति सलिलं वृक्षावर्ते सफेनमवस्थितं,
तृषितपतिता नैते क्लिष्टं पिबन्ति जलं खगाः ।
स्थलमभिपतन्त्यार्द्राः कीटा बिले जलपूरिते
नववलयिनो वृक्षा मूले जलक्षयरेखया ॥ २ ॥

---

taking the coronation-gear in full for me, Bharata approached me. But that storehouse of virtues has been sent back for protecting the realm. Pity! Single, he carries the very heavy yoke of a king. (1)

*(Reflecting)* It is always so. I shall just meet the Mithilā princess, my perpetual partner, to relieve myself of this sorrow. Where is the Videha princess gone? *(Walking about and seeing)* Eh! The bottoms of these trees bathed afresh in water indicate that Maithilī is not far off. For—

Water swirls round at the basin of the tree, still retaining its bubbles. These birds having flown thereto in thirst do not drink the turbid water. The



(विलोक्य) अये इयं वैदेही । भोः कष्टम् ।

योऽस्याः करः श्राम्यति दर्पणेऽपि
स नैति खेदं कलशं वहन्त्याः ।
कष्टं वनं स्त्रीजनसौकुमार्यं
समं लताभिः कठिनीकरोति ॥ ३ ॥

(उपेत्य) मैथिलि, अपि तपो वर्धते ।

**सीता**—[1]हम् आर्यपुत्रः । जयत्वार्यपुत्रः ।

**रामः**—मैथिलि, यदि ते नास्ति धर्मविघ्नः आस्यताम् ।

**सीता**—[2]यदार्यपुत्र आज्ञापयति । (उपविशति ।)

---

worms drenched in the holes filled with water come up to the surface. Fresh circles are formed at the roots of trees with the lines of water dried up. (2)

*(Seeing)* Here is the Videha princess. What a pity!

Her hand which would pain at the holding of a mirror feels no strain as she lifts the jar. The stern forest hardens the tenderness of women along with plants. (3)

*(Going near)* Mithilā princess, are you getting on well with your penance?

*Sītā.* My lord! Greetings, my lord.

*Rāma.* Mithilā princess, sit down if there be no disturbance to your austerity.

*Sītā.* As my lord bids. *(Sits down)*

---

१. हं अय्यउत्तो । जेदु अय्यउत्तो ।

२. जं अय्यउत्तो आणवेदि ।

**रामः**—मैथिलि, प्रतिवचनार्थिनीमिव त्वां पश्यामि । किमिदम् ।

**सीता**—[1]शोकशून्यहृदयस्येवार्यपुत्रस्य मुखरागः । किमेतत् ।

**रामः**—मैथिलि, स्थाने खलु कृता चिन्ता ।

**कृतान्तशल्याभिहते शरीरे तथैव तावद्धृदयव्रणो मे ।**
**नानाफलाः शोकशराभिघातास्तत्रैव तत्रैव पुनः पतन्ति ॥ ४ ॥**

**सीता**—[2]आर्यपुत्रस्य क इव संतापः ।

**रामः**—श्वस्तत्रभवतस्तातस्यानुसंवत्सरश्राद्धविधिः । कल्पविशेषेण निवपनक्रियामिच्छन्ति पितरः । तत् कथं निर्वर्तयिष्यामीत्येतच्चिन्त्यते । अथवा,

---

*Rāma.* Mithilā princess, you seem keen to ask me something. What is it?

*Sītā.* Your complexion betrays a heart vacant through grief. Why is it?

*Rāma.* Mithilā princess, your guess is right.

In my body smitten by the darts of Fate the wound of the heart remains the same. The thrusts of grief's arrows of manifold consequence fall there and there only again and again. (4)

*Sītā.* What is the worry of my lord?

*Rāma.* To-morrow is the annual ceremony of my revered father. The departed fathers seek an offer of libations with speciality. I am concerned how I am to carry it out. Or rather,

---

१. सोअसुण्णहिअअस्स विअ अय्यउत्तस्स मुहराओ । किं एदं ।

२. अय्यउत्तस्स को विअ सन्दावो ।



**गच्छन्ति तुष्टिं खलु येन केन**
**त एव जानन्ति हि तां दशां मे ।**
**इच्छामि पूजां च तथापि कर्तुं**
**तातस्य रामस्य च सानुरूपाम् ॥ ५ ॥**

**सीता**—[1]आर्यपुत्र, निर्वर्तयिष्यति श्राद्धं भरत ऋद्ध्या, अवस्थानुरूपं फलोदकेनाप्यार्यपुत्रः । एतत् तातस्य बहुमततरं भविष्यति ।

**रामः**—मैथिलि,

**फलानि दृष्ट्वा दर्भेषु स्वहस्तरचितानि नः ।**
**स्मारितो वनवासं च तातस्तत्रापि रोदिति ॥ ६ ॥**

---

They will indeed be pleased in whatever manner. For they themselves know my present condition. However, I would like to do worship worthy of my father and befitting Rāma. (5)

*Sītā.* My lord, Bharata will perform the Śrāddha with pomp, and you too with fruit and water according to your state. This will be prized high by the father.

*Rāma.* Mithilā princess,

On seeing the fruits arranged with my own hand on the darbha grass our father will be reminded of our residence in the forest and thereat begin to weep. (6)

---

१. अय्यउत्त णिव्वत्तइस्सिदि सद्धं भरदो रिद्धीए, अवत्थाणुरूवं फळोदएण वि अय्यउत्तो । एदं तादस्स बहुमदअरं भविस्सदि ।

(ततः प्रविशति परिव्राजकवेषो रावणः ।)

**रावणः**—एष भोः ।

**नियतमनियतात्मा रूपमेतद्गृहीत्वा**
**खरवधकृतवैरं राघवं वञ्चयित्वा ।**
**स्वरपदपरिहीणां हव्यधारामिवाहं**
**जनकनृपसुतां तां हर्तुकामः प्रयामि ॥ ७ ॥**

(परिक्रम्याधो विलोक्य) इदं रामस्याश्रमपदद्वारम् । यावदवतरामि। (अवतरति ।) यावदहमप्यतिथिसमुदाचारमनुष्ठास्यामि। अहमतिथिः । कोऽत्र भोः ।

**रामः**—(श्रुत्वा) स्वागतमतिथये ।

**रावणः**—साधु विशेषितं खलु रूपं स्वरेण ।

---

(*Enter* Rāvaṇa *disguised as an ascetic*)

*Rāvaṇa.* Oh!

Indeed with an uncontrolled mind I have taken this guise and after cheating Rāghava who has incurred my enmity due to the slaughter of Khara, I wish to carry away that daughter of Janaka like a stream of offering thrown into the fire without the requisite accents and words. (7)

(*Walking about and stooping down*) This is the threshold of Rāma's hermitage. I shall get down. (*Descends*) I shall follow the practice of a guest. I am a guest. Who is there?

*Rāma.* (*Hearing*) Welcome to the guest.

*Rāvaṇa.* His voice truly surpasses his form.



**रामः**—(विलोक्य) अये भगवान् । भगवन् अभिवादये ।

**रावणः**—स्वस्ति ।

**रामः**—भगवन्, एतदासनमास्यताम् ।

**रावणः**—(आत्मगतं) कथमाज्ञप्त इवास्म्यनेन । (प्रकाशं) बाढम् । (उपविशति ।)

**रामः**—मैथिलि, पाद्यमानय भगवते ।

**सीता**—[1]यदार्यपुत्र आज्ञापयति । (निष्क्रम्य प्रविश्य) इमा आपः ।

**रामः**—शुश्रूषय भगवन्तम् ।

**सीता**—[2]यदार्यपुत्र आज्ञापयति ।

**रावणः**—(मायाप्रकाशनपर्याकुलो भूत्वा) भवतु भवतु ।

---

*Rāma.* (*Seeing*) Eh! A holy personage. Holy sir, I salute.

*Rāvaṇa.* Peace be to you.

*Rāma.* Holy sir, please take this seat.

*Rāvaṇa.* (*Within*) He seems to command me. (*Aloud*) Well. (*Sits down*)

*Rāma.* Mithilā princess, bring water to wash the feet with for His Holiness.

*Sītā.* As my lord bids. (*Exit and re-enter*) Here is water.

*Rāma.* Serve His Holiness.

*Sītā.* As my lord bids.

*Rāvaṇa.* (*Apprehending exposure of deceit and*

---

१. जं अय्यउत्तो आणवेदि । (निष्क्रम्य प्रविश्य) इमा आवो ।
२. जं अय्यउत्तो आणवेदि ।

इयमेका पृथिव्यां हि मानुषीणामरुन्धती ।
यस्या भर्तेति नारीभिः सत्कृतः कथ्यते भवान् ॥ ८ ॥

रामः—तेन हि आनय । अहमेव शुश्रूषयिष्ये ।

रावणः—अयि छायां परिहृत्य शरीरं न लङ्घयामि । वाचानुवृत्तिः खल्वतिथिसत्कारः । पूजितोऽस्मि । आस्यताम् ।

रामः—बाढम् । (उपविशति ।)

रावणः—(आत्मगतं) यावदहमपि ब्राह्मणसमुदाचारमनुष्ठास्यामि । (प्रकाशं) भोः । काश्यपगोत्रोऽस्मि । साङ्गोपाङ्गं वेदमधीये, मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं, प्राचेतसं श्राद्धकल्पं च ।

---

*getting agitated)* Let it be. Let it be.

She is the one Arundhatī on earth among mortals, of whom you are referred to with honour as the lord by all women. (8)

*Rāma.* Bring it then. I shall myself serve him.

*Rāvaṇa.* After avoiding the shadow I shall not profane the body. An accommodation with words is honour done to a guest. I have been respected. Sit down.

*Rāma.* Well. *(Sits)*

*Rāvaṇa.* *(Within)* I shall just behave like a Brahmin. *(Aloud)* Eh! I am sprung of Kāśyapa's race. I have studied Vedas with all their limbs and accessories, Manu's code of Dharma, Maheśvara's science of Yoga, Bṛhaspatī's science of politics, Medhātithi's



रामः—कथं कथं श्राद्धकल्पमिति ।

रावणः—सर्वाः श्रुतीरतिक्रम्य श्राद्धकल्पे स्पृहा दर्शिता । किमेतत् ।

रामः—भगवन् भ्रष्टायां पितृमत्तायामागम इदानीमेषः ।

रावणः—अलं परिहृत्य । पृच्छतु भवान् ।

रामः—भगवन् निवपनक्रियाकाले केन पितॄंस्तर्पयामि ।

रावणः—सर्वं श्रद्धया दत्तं श्राद्धम् ।

रामः—भगवन्, अनादरतः परित्यक्तं भवति । विशेषार्थं पृच्छामि ।

रावणः—श्रूयताम् । विरूढेषु दर्भाः, ओषधीषु तिलाः, कलायं शाकेषु, मत्स्येषु महाशफरः, पक्षिषु वार्ध्रीणसः, पशुषु गौः खड्गो वा इत्येते मानुषाणां विहिताः ।

---

science of logic and Pracetas's code of ritual.

*Rāma.* What! 'Code of the ritual?'

*Rāvaṇa.* You are keen on the code of the ritual in supersession of all the scriptures? How is it?

*Rāma.* Holy sir, as I have lost my father, that is the science now relevant.

*Rāvaṇa.* No need to withhold. Ask freely.

*Rāma.* Holy sir, with what can I please the shades of fathers at the offer of libations?

*Rāvaṇa.* Whatever is given in faith is a fit offering to the *manes.*

*Rāma.* Holy sir, and that given without faith or devotion becomes rejected. But I ask you for particulars.

*Rāvaṇa.* Be it heard. These are prescribed in the

रामः—भगवन्, वाशब्देनावगतमन्यदप्यस्तीति ।

रावणः—अस्ति प्रभावसंपाद्यम् ।

रामः—भगवन्, एष एव मे निश्चयः ।

उभयस्यास्ति सान्निध्यं यद्येतत्साधयिष्यति ।
धनुर्वा तपसि श्रान्ते श्रान्ते धनुषि वा तपः ॥ ९ ॥

रावणः—सन्ति । हिमवति प्रतिवसन्ति ।

रामः—हिमवतीति । ततस्ततः?।

रावणः—हिमवतः सप्तमे शृङ्गे प्रत्यक्षस्थाणुशिरःपतितगङ्गाम्बुपायिनो वैदूर्यश्यामपृष्ठाः पवनसमजवाः काञ्चनपार्श्वा नाम

---

case of mortals:—Darbha in the grass species, sesamum among herbs, black grain among vegetables, carp among the fish, Vārdhrāṇasa among the birds, and among animals the bull, rhinoceros or—

*Rāma.* Holy sir, the word 'or' imports that there is something else.

*Rāvaṇa.* There is, but it is to be secured by might.

*Rāma.* Holy sir, that is exactly my idea.

Both are present if they can secure it,—The bow when penance lags behind and penance when the bow is wearied. (9)

*Rāvaṇa.* There are. They live in the Himalayas.

*Rāma.* In the Himalayas. Then?

*Rāvaṇa.* On the seventh peak of the Himalayas there are the deer that drink the water of the Gaṅgā falling direct from Śiva's head. Their backs are brown like lapis-lazuli and they are fleet like the



मृगाः, यैर्वैखानसवालखिल्यनैमिशीयादयो महर्षयश्चिन्तितमात्रोपस्थितविपन्नैः श्राद्धान्यभिवर्धयन्ति ।

तैस्तर्पिताः सुतफलं पितरो लभन्ते
हित्वा जरां खमुपयान्ति हि दीप्यमानाः ।
तुल्यं सुरैः समुपयान्ति विमानवास-
मावर्तिभिश्च विषयैर्न बलाद्ध्रियन्ते ॥ १० ॥

रामः—मैथिलि,

आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च
विन्ध्यं वनं तव सखीर्दयिता लताश्च ।
वत्स्यामि तेषु हिमवद्गिरिकाननेषु
दीप्तैरिवौषधिवनैरुपरञ्जितेषु ॥ ११ ॥

---

wind. They are called the golden-sided. They present themselves at the mere thought to the great sages like Vaikhānasas, Vālakhilyas and Naimiśīyas and others and meet with death. With these the sages enrich their feasts to the Pitṛs.

Propitiated with them, the departed fathers realise the purpose of having sons. They cast off their old age and go up to Heaven, shining bright. They move in aerial cars alike with the gods and are not forcibly drawn by the pleasures that cause confusion. (10)

*Rāma.* Mithilā princess,

Take leave of your adopted children, the deer and the trees and also of the Vindhya woods and of

सीता—[1]यदार्यपुत्र आज्ञापयति ।

रावणः—कौसल्यामात, अलमतिमनोरथेन । न ते मानुषैर्दृश्यन्ते ।

रामः—भगवन्, किं हिमवति प्रतिवसन्ति ।

रावणः—अथकिम् ।

रामः—तेन हि पश्यतु भवान् ।

सौवर्णान्वा मृगांस्तान्मे हिमवान्दर्शयिष्यति ।
भिन्नो मद्बाणवेगेन क्रौञ्चत्वं वा गमिष्यति ॥ १२ ॥

रावणः—(स्वगतं) अहो असह्यः खल्वस्यावलेपः । (प्रकाशं) अये विद्युत्संपात इव दृश्यते । कौसल्यामात, इहस्थमेव भवन्तं पूजयति हिमवान् । एष काञ्चनपार्श्वः ।

---

your dear friends, the plants. I shall live in those woods of the Himalaya mountain lit, as it were, by the glowing thickets of herbs. (11)

*Sītā.* As my lord bids.

*Rāvaṇa.* Kausalyā's son, don't be too ambitious. They are not to be seen by mortals.

*Rāma.* Holy sir, do they live in the Himalayas?

*Ravaṇa.* Yes.

*Rāma.* Then you will see.

Himavān will either present those golden deer to my vision or, pierced by the force of my arrow, will reach the state of Mount Krauñca. (12)

*Rāvaṇa.* *(Within)* How intolerable is his pride! *(Aloud)* Eh! It seems to be a flash of lightning.

---

१. जं अय्यउत्तो आणवेदि ।



रामः—भगवतो वृद्धिरेषा ।

सीता—[1]दिष्ट्यार्यपुत्रो वर्धते ।

रामः—न न ।

तातस्यैतानि भाग्यानि यदि स्वयमिहागतः ।
अर्हत्येष हि पूजायां लक्ष्मणं ब्रूहि मैथिलि ॥ १३ ॥

सीता—[2]आर्यपुत्र, ननु तीर्थयात्रात उपावर्तमानं कुलपतिं प्रत्युद्गच्छेति संदिष्टः सौमित्रिः ।

रामः—तेन हि अहमेव यास्यामि ।

सीता—[3]आर्यपुत्र, अहं किं करिष्यामि ।

---

Kausalyā's son, Himavān honours you even as you are here. Yonder is a golden-sided deer.

*Rāma.* It is a fortune due to Your Holiness.

*Sītā.* Thank god. You are fortunate, my lord.

*Rāma.* No, no.

It is the fortune of my father if the deer has come here of its own accord. It deserves to be offered in worship. Tell Lakshmaṇa, O Mithilā princess. (13)

*Sītā.* My lord, Lakshmaṇa has been ordered by you to go and receive the chief of the penance-grove returning from a pilgrimage.

*Rāma.* Then I will myself go.

---

१. दिट्ठिआ अय्यउत्तो वड्ढइ ।
२. अय्यउत्त णं तित्थअत्तादो उवावत्तमाणं कुळवदिं पच्चुग्गच्छेहित्ति सन्दिट्ठो सोमित्ती । ३. अय्यउत्त अहं किं करिस्सं ।

रामः—शुश्रूषयस्व भगवन्तम् ।

सीता—[1]यदार्यपुत्र आज्ञापयति ।

(निष्क्रान्तो रामः ।)

रावणः—अये अयमर्घ्यमादायोपसर्पति राघवः । एष इदानीं पूजामनवेक्ष्य धावन्तं मृगं दृष्ट्वा धनुरारोपयति राघवः ।

अहो बलमहो वीर्यमहो सत्वमहो जवः ।
राम इत्यक्षरैरल्पैः स्थाने व्याप्तमिदं जगत् ॥ १४ ॥

एष मृगः एकप्लुतातिक्रान्तशरविषयो वनगहनं प्रविष्टः ।

सीता—(आत्मगतं) [2]आर्यपुत्रविरहिताया भयं मेऽत्रोत्पद्यते ।

---

*Sītā.* My lord, what shall I do?

*Rāma.* Attend on His Holiness.

*Sītā.* As my lord bids.

*(Exit Rāma)*

*Rāvaṇa.* Eh! Rāghava goes here with Arghya in hand. And now on seeing the deer running regardless of the worship Rāghava bends the bow.

What strength! What power! What might! And what rapidity! Rightly is this world charmed by the few letters making—'Rāma.' (14)

The deer has evaded the range of his arrow in one bound and entered the jungle.

*Sītā. (Within)* I grow afraid, now that I am separated from my lord.

---

१. जं अय्यउत्तो आणवेदि ।
२. अय्यउत्तविरहिदाए भअं मे एत्थ उप्पज्जइ ।



रावणः—(आत्मगतं)

माययापहृते रामे सीतामेकां तपोवनात् ।
हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम् ॥ १५ ॥

सीता—[1]यावदुटजं प्रविशामि । (गन्तुमीहते ।)

रावणः—(स्वरूपं गृहीत्वा) सीते, तिष्ठ तिष्ठ ।

सीता—(सभयं) [2]हं, क इदानीमयम् ।

रावणः—किं न जानीषे ।

युद्धे येन सुराः सदानवगणाः शक्रादयो निर्जिता
दृष्ट्वा शूर्पणखाविरूपकरणं श्रुत्वा हतौ भ्रातरौ ।
दर्पाद्दुर्मतिमप्रमेयबलिनं रामं विलोभ्य च्छलैः
स त्वां हर्तुमना विशालनयने प्राप्तोऽस्म्यहं रावणः ॥ १६ ॥

---

*Rāvaṇa. (Within)* Now that Rāma is removed by guile, I will carry away from the penance-forest the weeping lonely girl Sītā like an offering thrown into the fire without the pronouncement of Mantras. (15)

*Sītā.* I shall get into the hut. *(Tries to go)*

*Rāvaṇa. (Assuming his own form)* Sītā, stop, stop.

*Sītā. (With fear)* Ah, who is this?

*Rāvaṇa.* Don't you know?

I have vanquished Indra and all the gods and the hosts of demons in battle. On seeing the disfigurement of Śūrpaṇakhā and on hearing of my brothers slain I have cheated Rāma by guile, the wicked Rāma

---

१. जाव उडजं पविसामि । २. हं को दाणि अअं ।

**सीता**—[1]हं रावणो नाम । (प्रतिष्ठते ।)

**रावणः**—आः रावणस्य चक्षुर्विषयमागता क यास्यसि ।

**सीता**—[2]आर्यपुत्र, परित्रायस्व परित्रायस्व । सौमित्रे, परित्रायस्व परित्रायस्व ।

**रावणः**—सीते, श्रूयतां मत्पराक्रमः ।

**भग्नः शक्रः कम्पितो वित्तनाथः**
**कृष्टः सोमो मर्दितः सूर्यपुत्रः ।**
**धिग् भोः स्वर्गं भीतदेवैर्निविष्टं**
**धन्या भूमिर्वर्तते यत्र सीता ॥ १७ ॥**

---

proud of his immeasurable strength and, O lady of broad eyes, I have come intent on taking you off, I am Rāvaṇa. (16)

*Sītā.* Rāvaṇa! *(Starts)*

*Rāvaṇa.* Ah! Come within the range of Rāvaṇa's eyes, where will you go?

*Sītā.* My lord, save, save me. Lakshmaṇa, save, save me.

*Rāvaṇa.* Sītā, hear my valour.

Indra was worsted, Kubera shaken, Soma dragged, Yama crushed. Ah fie upon the heaven occupied by the panicky gods. Blessed is the Earth where remains Sītā. (17)

*Sītā.* My lord, save, save me. Lakshmaṇa, save,

---

१. हं ळावणो णाम ।
२. अय्यउत्त परित्ताआहि परित्ताआहि । सोमित्ती परित्ताआहि परित्ताआहि ।



**सीता**—[1]आर्यपुत्र, परित्रायस्व परित्रायस्व । सौमित्रे, परित्रायस्व परित्रायस्व माम् ।

**रावणः**—

**रामं वा शरणमुपेहि लक्ष्मणं वा**
**स्वर्गस्थं दशरथमेव वा नरेन्द्रम् ।**
**किं वा स्यात् कुपुरुषसंश्रितैर्वचोभि-**
**र्न व्याघ्रं मृगशिशवः प्रधर्षयन्ति ॥ १८ ॥**

**सीता**—[2]आर्यपुत्र, परित्रायस्व परित्रायस्व । सौमित्रे, परित्रायस्व परित्रायस्व माम् ।

**रावणः**—

**विलपसि किमिदं विशालनेत्रे**
**विगणय मां च यथा तवार्यपुत्रम् ।**
**विपुलबलयुतो ममैष योद्धुं**
**ससुरगणोऽप्यसमर्थ एव रामः ॥ १९ ॥**

---

save me.

*Rāvaṇa.* Seek refuge of Rāma or of Lakshmaṇa or of even King Daśaratha that is in heaven. What is the use of your appeals to despicable men? Fawns dare not attack a tiger. (18)

*Sītā.* My lord, save, save me. Saumitri, help, help.

*Rāvaṇa.* Why do you wail aloud? Lady of broad

---

१. अय्यउत्त परित्ताआहि परित्ताआहि । सोमित्ती परित्ताआहि परित्ताआहि मं ।
२. अय्यउत्त परित्ताआहि परित्ताआहि । सोमित्ती परित्ताआहि परित्ताआहि मं ।

सीता—(सरोषं) [1]शप्तोऽसि ।

रावणः—हहह । अहो पतिव्रतायास्तेजः ।

योऽहमुत्पतितो वेगान्न दग्धः सूर्यरश्मिभिः ।
अस्याः परिमितैर्दग्धः शप्तोऽसीत्येभिरक्षरैः ॥ २० ॥

सीता—[2]आर्यपुत्र, परित्रायस्व परित्रायस्व ।

रावणः—(सीतां गृहीत्वा) भो भो जनस्थानवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः ।

बलादेष दशग्रीवः सीतामादाय गच्छति ।
क्षात्रधर्मे यदि स्निग्धः कुर्याद्रामः पराक्रमम् ॥ २१ ॥

---

eyes, treat me same as your lord. This Rāma with all his strength and the backing of all the gods will not be able to face me in battle. (19)

*Sītā.* *(Indignantly)* Thou art cursed.

*Rāvaṇa.* Ha! The power of chastity!

I was not burnt by the rays of the Sun as I flew through the sky with rapidity. But I am by these few letters of hers, 'Thou art cursed.' (20)

*Sītā.* My lord, help, help.

*Rāvaṇa.* *(Taking hold of Sītā)* Ye sages resident of Janasthāna, hear, hear.

Here the ten-necked one goes, taking Sītā by force. If Rāma cares for the Kshatriya role let him show his valour. (21)

---

१. सत्तो सि ।

२. अय्यउत्त परित्ताआहि परित्ताआहि ।



सीता—[1]आर्यपुत्र, परित्रायस्व परित्रायस्व ।

रावणः—(परिक्रामन् विलोक्य) अये, स्वपक्षपवनोत्क्षेपक्षुभितवनषण्डश्चण्डचञ्चुरभिधावत्येष जटायुः । आः, तिष्ठेदानीम् ।

मद्भुजाकृष्टनिस्त्रिंशकृत्तपक्षक्षतच्युतैः ।
रुधिरैरार्द्रगात्रं त्वां नयामि यमसादनम् ॥ २२ ॥

(निष्क्रान्तौ ।)

पञ्चमोऽङ्कः ।

---

*Sītā.* My lord, help, help.

*Rāvaṇa.* *(Walking about and seeing)* Lo! Jaṭāyus with his ferocious beak, shaking the clusters of trees with the speed of the blasts of his wings, rushes at me. Ah! Stop.

Cutting your wings with the sword drawn by my hand, I leave your body drenched in blood streaming from the wounds inflicted and send you to the abode of Death. (22)

*(Exeunt Both)*

The End of the Fifth Act.

---

१. अय्यउत्त परित्ताआहि परित्ताआहि ।

# षष्ठोऽङ्कः ।

(ततः प्रविशतो वृद्धतापसौ ।)

उभौ—परित्रायतां परित्रायतां भवन्तः ।

प्रथमः—

इयं हि नीलोत्पलदामवर्चसा
मृणालशुक्रोज्ज्वलदंष्ट्रहासिना ।
निशाचरेन्द्रेण निशार्धचारिणा
मृगीव सीता परिभूय नीयते ॥ १ ॥

द्वितीयः—एषा खलु तत्रभवती वैदेही ।

विचेष्टमानेव भुजङ्गमाङ्गना विधूयमानेव च पुष्पिता लता ।
प्रसह्य पापेन दशाननेन सा तपोवनात् सिद्धिरिवापनीयते ॥ २ ॥

---

ACT THE SIXTH.

(*Enter* two aged hermits)

*Both.* Rescue, rescue, sirs.

*The first hermit.* Lo! Sītā is overpowered and taken off like a roe by the king of demons, the wanderer at dead of night, akin in colour to a blue lotus-wreath, with laughter beaming through his teeth shining white like lotus-stalk. (1)

*The second hermit.* Here is her ladyship, the Videha princess.



उभौ—परित्रायतां परित्रायतां भवन्तः ।

प्रथमः—(ऊर्ध्वमवलोक्य) अये वचनसमकाल एव दशरथस्यानृण्यं कर्तुं 'मयि स्थिते क यास्यसी'ति रावणमाहूयान्तरिक्षमुत्पतितो जटायुः ।

द्वितीयः—एष रोषादुद्वृत्तनयनः प्रतिनिवृत्तो रावणः ।

प्रथमः—एष रावणः ।

द्वितीयः—एष जटायुः ।

उभौ—हन्तैतदन्तरिक्षे प्रवृत्तं युद्धम् ।

प्रथमः—काश्यप काश्यप, पश्य क्रव्यादीश्वरस्य सामर्थ्यम् ।

---

Struggling like a she-snake, like a blooming creeper being shattered, she is led forcibly away by the sinner, the ten-necked one, like the perfection of penance from the penance-grove. (2)

*Both.* Rescue, rescue, sirs.

*First.* *(Looking upward)* Eh, at the very time of calling out, Jaṭāyus has flown up the sky to repay his debt to Daśaratha, challenging Rāvaṇa with the words, 'Where will you go when I am here?'

*Second.* Lo! Rāvaṇa with eyes turned by rage turns back.

*First hermit.* This is Rāvaṇa.

*Second hermit.* This is Jaṭāyus.

*Both.* Oh! The combat has begun in the sky.

*First hermit.* Kāśyapa, Kāśyapa, look at the power of the king of eagles.

पक्षाभ्यां परिभूय वीर्यविषयं द्वन्द्वं प्रतिव्यूहते
तुण्डाभ्यां सुनिघृष्टतीक्ष्णमचलः संवेष्टनं चेष्टते ।
तीक्ष्णैरायसकण्टकैरिव नखैर्भीमान्तरं वक्षसो
वज्राग्रैरिव दार्यमाणविषमाच्छैलाच्छिला पाट्यते ॥ ३ ॥

**द्वितीयः**—हन्त संक्रुद्धेन रावणेनासिना क्रव्यादीश्वरः स दक्षिणांसदेशे हतः ।

**उभौ**—हा धिक् । पतितोऽत्रभवान् जटायुः ।

**प्रथमः**—भोः कष्टम् । एष खलु तत्रभवान् जटायुः

कृत्वा स्ववीर्यसदृशं परमं प्रयत्नं
क्रीडामयूरमिव शत्रुमचिन्तयित्वा ।
दीप्तं निशाचरपतेरवधूय तेजो
नागेन्द्रभग्नवनवृक्ष इवावसन्नः ॥ ४ ॥

---

Assailing with his wings, he engages in a duel in display of his valour. Steady, he makes an assault with the tips of his beak plunging deep and sharp. With claws as sharp as iron nails he tears the horrid entrails of his breast as a piece of rock would be split rough by the points of thunderbolt. (3)

*Second hermit.* Alas, the king of eagles has been wounded in the right pinion by the infuriated Rāvaṇa with his sword.

*Both.* Ah fie! The revered Jaṭāyus has fallen.

*First hermit.* Pity! Here is the revered Jaṭāyus.

After making a supreme effort in keeping with his valour and treating light the foe like a sport-



**उभौ**—स्वर्ग्योऽयमस्तु ।

**प्रथमः**—काश्यप, आगम्यताम् । इमं वृत्तान्तं तत्रभवते राघवाय निवेदयिष्यावः ।

**द्वितीयः**—बाढम् । प्रथमः कल्पः ।

(निष्क्रान्तौ ।)

**विष्कम्भः ।**

---

(ततः प्रविशति काञ्चुकीयः ।)

**काञ्चुकीयः**—क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते ।

(प्रविश्य)

**प्रतिहारी**—[1]आर्य, अहं विजया । किं क्रियताम् ।

---

peacock and shattering the glowing valour of the Rākshasa king, he has succumbed like a forest-tree broken by a tusker. (4)

*Both.* May he find his seat in Heaven.

*First hermit.* Kāśyapa, come. We will convey this news to the esteemed Rāghava.

*Second hermit.* Yes, it is our first duty.

*(Exeunt Both)*

INTERLUDE.

*(Enter the* Chamberlain)

*Chamberlain.* Eh! Who is there on duty at the golden gate?

*(Entering)*

*Portress.* Sir, I am Vijayā. What shall I do?

---

१. अय्य अहं विजया । किं करीअदु ।

**काञ्चुकीयः**—विजये, निवेद्यतां निवेद्यतां भरतकुमाराय—एष खलु रामदर्शनार्थं जनस्थानं प्रस्थितः प्रतिनिवृत्तस्तत्रभवान् सुमन्त्र इति ।

**प्रतिहारी**—[1]आर्य, अपि कृतार्थस्तातसुमन्त्र आगतः ।

**काञ्चुकीयः**—भवति, न जाने ।

हृदयस्थितशोकाग्निशोषिताननमागतम् ।
दृष्ट्वैवाकुलमासीन्मे सुमन्त्रमधुना मनः ॥ ५ ॥

**प्रतिहारी**—[2]आर्य, एतच्छ्रुत्वा पर्याकुलमिव मे हृदयम् ।

**काञ्चुकीयः**—भवति, किमिदानीं स्थिता । शीघ्रं निवेद्यताम् ।

---

*Chamberlain.* Intimate to Prince Bharata that the revered Sumantra who set out for Janasthāna to meet Rāma has returned.

*Portress.* Sir, has father Sumantra come back with success in his mission?

*Chamberlain.* Madam, I don't know.

My mind grew at once disturbed at the sight of Sumantra come back with a face withered by the fire of grief seated in his heart. (5)

*Portress.* Sir, my mind is perturbed at hearing this.

*Chamberlain.* Madam, why do you stay? Quickly inform.

---

१. अय्य अवि किदत्थो तादसुमन्तो आअदो ।
२. अय्य एदं सुणिअ पय्याउळं विअ मे हिअअं ।



**प्रतिहारी**—[1]आर्य, इयं निवेदयामि । (निष्क्रान्ता ।)

**काञ्चुकीयः**—(विलोक्य) अये, अयमत्रभवान् भरतकुमारः सुमन्त्रागमनजनितकुतूहलहृदयश्चीरवल्कलवसनश्चित्रजटापुञ्जपिञ्जरितोत्तमाङ्ग इत एवाभिवर्तते । य एषः

प्रख्यातसद्गुणगणः प्रतिपक्षकाल-
स्तिग्मांशुवंशतिलकस्त्रिदशेन्द्रकल्पः ।
आज्ञावशादखिलभूपरिरक्षणस्थः
श्रीमानुदारकलभेभसमानयानः ॥ ६ ॥

(ततः प्रविशति भरतः प्रतिहारी च ।)

**भरतः**—विजये, एवम्, उपगतस्तत्रभवान् सुमन्त्रः ।

---

*Portress.* Sir, I shall inform at once. [*Exit*

*Chamberlain.* *(Seeing)* Eh! Here the esteemed Prince Bharata comes up, clad in tree-bark, with a head tawny through the varied mass of matted hair, with a mind filled with curiosity at the arrival of Sumantra.

An aggregate of all renowned virtues, Death to his foes, the shining spot of the Sun's dynasty, equal to the king of gods, standing at the protection of the entire earth in obedience to the command, the glorious one comes with strides similar to those of a noble young elephant. (6)

*(Enter* Bharata *and the* Portress)

*Bharata.* Vijayā, is it so? Has the revered

---

१. अय्य इअं णिवेदेमि ।

गत्वा तु पूर्वमयमार्यनिरीक्षणार्थं
लब्धप्रसादशपथे मयि संनिवृत्ते ।
दृष्ट्वा किमागत इहात्रभवान् सुमन्त्रो
रामं प्रजानयनबुद्धिमनोभिरामम् ॥ ७ ॥

**काञ्चुकीयः**—(उपगम्य) जयतु कुमारः ।

**भरतः**—अथ कस्मिन् प्रदेशे वर्तते तत्रभवान् सुमन्त्रः ।

**काञ्चुकीयः**—असौ काञ्चनतोरणद्वारे ।

**भरतः**—तेन हि शीघ्रं प्रवेश्यताम् ।

**काञ्चुकीयः**—यदाज्ञापयति कुमारः । (निष्क्रान्तौ ।)

(ततः प्रविशति सुमन्त्रः प्रतिहारी च ।)

**सुमन्त्रः**—(सशोकं) कष्टं भोः कष्टम् ।

---

Sumantra arrived?

Previously I went to see my noble brother and returned with his favour coupled with a promise. Has the revered Sumantra now come back after seeing Rāma, the delight to the people's eyes, minds and hearts? (7)

*Chamberlain.* *(Approaching)* Greetings, prince.

*Bharata.* Where is the revered Sumantra?

*Chamberlain.* At the golden gate.

*Bharata.* Admit him soon.

*Chamberlain.* As the prince commands.

*(Exeunt Chamberlain and Portress)*

*(Enter* Sumantra *and the* Portress)

*Sumantra.* *(With grief)* Woe! Woe!



नरपतिनिधनं मयानुभूतं नृपतिसुतव्यसनं मयैव दृष्टम् ।
श्रुत इह स च मैथिलीप्रणाशो गुण इव बह्वपराद्धमायुषा मे ॥८॥

**प्रतिहारी**—(सुमन्त्रमुद्दिश्य) [1]एत्वेत्वार्यः । एष भर्ता । उपसर्पत्वार्यः ।

**सुमन्त्रः**—(उपसृत्य) जयतु कुमारः ।

**भरतः**—तात, अपि दृष्टस्त्वया लोकाविष्कृतपितृस्नेहः । अपि दृष्टं द्विधाभूतमरुन्धतीचारित्रम् । अपि दृष्टं त्वया निष्कारणावहितवनवासं सौभ्रात्रम् ।

(सुमन्त्रः सचिन्तस्तिष्ठति ।)

**प्रतिहारी**—[2]भर्तृदारकः खल्वार्यं पृच्छति ।

---

I have suffered the king's demise. I have seen the prince's woe. Now I have heard the loss of the Mithilā princess. My life has met with evils in a train. (8)

*Portress.* *(Towards Sumantra)* Come, sir. Here is the prince. Go near, sir.

*Sumantra.* *(Going near)* Greetings, prince.

*Bharata.* Father, did you meet the shining example of filial love in the world? Did you see the replica of Arundhatī's character? Did you see the fraternal love which brought a self-imposed exile into a forest?

*(Sumantra stands embarrassed)*

*Portress.* The prince asks you, sir.

---

१. एदु एदु अय्यो । एसो भट्टा । उपसप्पदु अय्यो ।

२. भट्टिदारओ खु अय्यं पुच्छदि ।

सुमन्त्रः—भवति, किं माम् ।

भरतः—(स्वगतं) अतिमहान् खल्वायासः । संतापाद् भ्रष्टहृदयः । (प्रकाशं) अपि मार्गात्प्रतिनिवृत्तस्तत्रभवान् ।

सुमन्त्रः—कुमार, त्वन्नियोगाद् रामदर्शनार्थं जनस्थानं प्रस्थितः कथमहमन्तरा प्रतिनिवर्तिष्ये ।

भरतः—किंतु खलु क्रोधेन वा लज्जया वात्मानं न दर्शयन्ति ।

सुमन्त्रः—कुमार,

कुतः क्रोधो विनीतानां लज्जा वा कृतचेतसाम् ।
मया दृष्टं तु तच्छून्यं तैर्विहीनं तपोवनम् ॥ ९ ॥

भरतः—अथ क गता इति श्रुताः ।

---

*Sumantra.* Does he ask me, madam?

*Bharata.* *(Within)* Great is his strain. Through anguish his heart has slipped out. *(Aloud)* Sir, have you come back from your journey?

*Sumantra.* Prince, having started for Janasthāna to see Rāma at your bidding, how would I return in the middle?

*Bharata.* Do they refuse to appear through anger or shame?

*Sumantra.* Prince,

Where is anger for persons of self-discipline? Where is shame for the resolute? But I beheld that Holy forest empty and destitute of them. (9)

*Bharata.* Did you hear where they had gone?

*Sumantra.* There is an abode of monkeys called



सुमन्त्रः—अस्ति किल किष्किन्धा नाम वनौकसां निवासः । तत्र गता इति श्रुताः ।

भरतः—हन्त अविज्ञातपुरुषविशेषाः खलु वानराः । दुःखिताः प्रतिवसन्ति ।

सुमन्त्रः—कुमार, तिर्यग्योनयोऽप्युपकृतमवगच्छन्ति ।

भरतः—तात, कथमिव ।

सुमन्त्रः—

सुग्रीवो भ्रंशितो राज्याद् भ्रात्रा ज्येष्ठेन वालिना ।
हृतदारो वसञ्छैले तुल्यदुःखेन मोक्षितः ॥ १० ॥

भरतः—तात, कथं तुल्यदुःखेन नाम ।

सुमन्त्रः—(आत्मगतं) हन्त सर्वमुक्तमेव मया । (प्रकाशं) कुमार, न खलु किंचित् । ऐश्वर्यभ्रंशतुल्यता ममाभिप्रेता ।

---

Kishkindhā. I heard they had gone there.

*Bharata.* Oh! Monkeys do not know the distinctions of men. They must live hard.

*Sumantra.* Prince, living beings of the lower order are grateful.

*Bharata.* Father, how?

*Sumantra.* Sugrīva, ousted from his kingdom by his elder brother Vālin and robbed of his wife and dwelling on a mountain, was extricated by the one alike in woe. (10)

*Bharata.* Father, what do you mean by 'alike in woe'?

**भरतः**—तात, किं गूहसे। स्वर्गं गतेन महाराजपादमूलेन शापितः स्याः, यदि सत्यं न ब्रूयाः।

**सुमन्त्रः**—का गतिः। श्रूयताम्

**वैरं मुनिजनस्यार्थे रक्षसा महता कृतम्।**
**सीता मायामुपाश्रित्य रावणेन ततो हृता॥ ११॥**

**भरतः**—कथं हृतेति। (मोहमुपगतः।)

**सुमन्त्रः**—समाश्वसिहि समाश्वसिहि।

**भरतः**—(पुनः समाश्वस्य) भोः कष्टम्।

**पित्रा च बान्धवजनेन च विप्रयुक्तो**
**दुःखं महत्समनुभूय वनप्रदेशे।**
**भार्यावियोगमुपलभ्य पुनर्ममार्यो**
**जीमूतचन्द्र इव खे प्रभया वियुक्तः॥ १२॥**

---

*Sumantra.* *(Within)* I have already said everything. *(Aloud)* Prince, nothing. I meant parity in the loss of throne.

*Bharata.* Father, what do you hide? You are cursed by the feet of my father in heaven if you don't tell the truth.

*Sumantra.* No escape. Be it heard.

He incurred the enmity of the great demon in the cause of sages. Sītā was thereupon abducted by Rāvaṇa by resorting to a ruse. (11)

*Bharata.* What? Abducted? *(Faints)*

*Sumantra.* Take heart, take heart.

*Bharata.* *(Coming back to consciousness)* What a pity!

Separated from his father and kinsmen, undergoing sore distress in the woods, my noble brother has now met with the loss of his wife like the cloudy moon shorn of lustre in the sky. (12)

What shall I do now? Yes, I see. Father, follow me.

*Sumantra.* As the prince commands.

*(Both walk about)*

*Sumantra.* Prince, don't, don't go. It is the quadrangle of the queens.

*Bharata.* I have my business exactly there. Eh! Who is at the gate?

*(Entering)*

*Portress.* Greetings, prince. I am Vijayā.

*Bharata.* Vijayā, announce my arrival to her ladyship.



भोः किमिदानीं करिष्ये। भवतु, दृष्टम्। अनुगच्छतु मां तातः।

**सुमन्त्रः**—यदाज्ञापयति कुमारः। (उभौ परिक्रामतः।)

**सुमन्त्रः**—कुमार, न खलु न खलु गन्तव्यम्। देवीनां चतुश्शालमिदम्।

**भरतः**—अत्रैव मे कार्यम्। भोः, क इह प्रतिहारे।

(प्रविश्य)

**प्रतिहारी**—[1]जयतु भर्तृदारकः। विजया खल्वहम्।

**भरतः**—विजये, ममागमनं निवेदयात्रभवत्यै।

---

१. जेदु भट्टिदारओ। विजआ खु अहं।

**प्रतिहारी**—[1]कतमस्यै भट्टिन्यै निवेदयामि ।

**भरतः**—या मां राजानमिच्छति ।

**प्रतिहारी**—(आत्मगतं) [2]हं किं नु खलु भवेत् । (प्रकाशं) भर्तः, तथा । (निष्क्रान्ता ।)

(ततः प्रविशति कैकेयी प्रतिहारी च ।)

**कैकेयी**—[3]विजये, मां प्रेक्षितुं भरत आगतः ।

**प्रतिहारी**—[4]भट्टिनि, तथा । भर्तृदारकस्य रामस्य सकाशात् तातसुमन्त्र आगतः । तेन सह भर्तृदारको भरतो भट्टिनीं प्रेक्षितुमिच्छति किल ।

**कैकेयी**—(स्वगतं) [5]केन खलूद्घातेन मामुपालप्स्यते भरतः ।

---

*Portress.* To which of the queens?

*Bharata.* To her who wishes me king.

*Portress.* *(Within)* What is this? *(Aloud)* Yes, Your Highness. [*Exit*

*(Enter* Kaikeyī *and the* Portress)

*Kaikeyī.* Vijayā, Bharata has come to see me?

*Portress.* Yes, Your Highness. Father Sumantra has come back from prince Rāma. Prince Bharata wants to see Your Highness along with him.

---

१. कदमाए भट्टिणीए णिवेदेमि ।

२. हं किं णुखु भवे । (प्रकाशं) भट्टा तह ।

३. विजए मं पेक्खिदुं भरदो आअदो ।

४. भट्टिणि तह । भट्टिदारअस्स रामस्स सआसादो तादसुमन्तो आअदो । तेण सह भट्टिदारओ भरदो भट्टिणिं पेक्खिदुं इच्छदि किळ ।

५. केण खु उग्घादेण मं उवाळम्भिस्सिदि भरदो ।



**प्रतिहारी**—[1]भट्टिनि, किं प्रविशतु भर्तृदारकः ।

**कैकेयी**—[2]गच्छ । प्रवेशयैनम् ।

**प्रतिहारी**—[3]भट्टिनि, तथा । (परिक्रम्योपसृत्य) जयतु भर्तृदारकः । प्रविशतु किल ।

**भरतः**—विजये किं निवेदितम् ।

**प्रतिहारी**—[4]आम् ।

**भरतः**—तेन हि प्रविशावः ।

(प्रविशतः ।)

**कैकेयी**—[5]जात, विजया मन्त्रयते—रामस्य सकाशात्सुमन्त्र आगत इति ।

---

*Kaikeyī.* *(Within)* In what context is Bharata going to reproach me?

*Portress.* Your Highness, can the prince enter?

*Kaikeyī.* Go and admit him.

*Portress.* Yes, Your Highness. *(Walking about and going near)* Greetings, prince. You may enter.

*Bharata.* Vijayā, have you informed?

*Portress.* Yes.

*Bharata.* Then let us enter.

*(Both enter)*

*Kaikeyī.* Child, Vijayā says Sumantra has come

---

१. भट्टिणि किं पविसदु भट्टिदारओ । २. गच्छ । पवेसेहि णं ।

३. भट्टिणि तह । (परिक्रम्योपसृत्य) जेदु भट्टिदारओ । पविसदु किळ ।

४. आम ।

५. जाद, विअआ मन्तेदि—रामस्स सआसादो सुमन्तो आअदत्ति ।

**भरतः**—अतः परं प्रियं निवेदयाम्यत्रभवत्यै ।
**कैकेयी**—[१]जात, अपि कौसल्या सुमित्रा च शब्दायितव्या ।
**भरतः**—न खलु ताभ्यां श्रोतव्यम् ।
**कैकेयी**—(आत्मगतं) [२]हं किं नु खलु भवेत्। (प्रकाशं) भण जात।
**भरतः**—श्रूयताम्

> यः स्वराज्यं परित्यज्य त्वन्नियोगाद्वनं गतः ।
> तस्य भार्या हृता सीता पर्याप्तस्ते मनोरथः ॥ १३ ॥

**कैकेयी**—हं ।
**भरतः**—

> हन्त भोः सत्वयुक्तानामिक्ष्वाकूणां मनस्विनाम् ।
> वधूप्रधर्षणं प्राप्तं प्राप्यात्रभवतीं वधूम् ॥ १४ ॥

---

back from Rāma.

*Bharata.* I shall give you a more pleasant news.

*Kaikeyī.* Child, should Kausalyā and Sumitrā be called in?

*Bharata.* It is not for their hearing.

*Kaikeyī.* *(Within)* What will it be? *(Aloud)* Speak, child.

*Bharata.* Listen.

He left his throne and went into the forest at your bidding. His wife Sītā has been abducted. Your dream is fulfilled. (13)

*Kaikeyī.* Ah!

---

१. जाद, अवि कोसल्ला सुमित्ता अ सद्दावइदव्वा ।
२. हं किं णुहु भवे। (प्रकाशं) भणाहि जाद।



**कैकेयी**—(आत्मगतं) [१]भवतु, इदानीं कालः कथयितुम् । (प्रकाशं) जात, त्वं न जानासि महाराजस्य शापम् ।
**भरतः**—किं शप्तो महाराजः ।
**कैकेयी**—[२]सुमन्त्र, आचक्ष्व विस्तरेण ।
**सुमन्त्रः**—यदाज्ञापयति भवती । कुमार, श्रूयताम्—पुरा मृगयां गतेन महाराजेन कस्मिंश्चित्सरसि कलशं पूरयमाणो वनगजबृंहितानुकारिशब्दसमुत्पन्नवनगजशङ्कया शब्दवेधिना शरेण विपन्नचक्षुषो महर्षेश्चक्षुर्भूतो मुनितनयो हिंसितः ।

---

*Bharata.* Alack! The mighty and brave Ikshvākus have met with an outrage on their daughter-in-law, having got you married into their house. (14)

*Kaikeyī.* *(Within)* Be it so. It is time for me to disclose. *(Aloud)* Child, you are not aware of the curse on the king.

*Bharata.* Was the king under a curse?

*Kaikeyī.* Sumantra, tell him in detail.

*Sumantra.* As Your ladyship commands. Prince, listen. In days of old the king went out ahunting. A sage's son was filling a jar at a certain tank. Mistaking him for a forest-elephant through the noise which resembled that of an elephant drawing water by its trunk, he aimed his arrow at the sound and killed the sage-boy, the eye of his blind father.

---

१. भोदु, दाणि कालो कहेउं। (प्रकाशं) जाद तुवं ण आणासि महाराअस्स सावं।
२. सुमन्त, आअक्ख वित्थरेण ।

**भरतः**—हिंसित इति । शान्तं शान्तं पापम् । ततस्ततः ।

**सुमन्त्रः**—ततस्तमेवं गतं दृष्ट्वा

> **तेनोक्तं रुदितस्यान्ते मुनिना सत्यभाषिणा ।**
> **यथाहं भोस्त्वमप्येवं पुत्रशोकाद्विपत्स्यसे ॥ १५ ॥**

इति ।

**भरतः**—नन्विदं कष्टं नाम ।

**कैकेयी**—[1]जात, एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः । न खलु राज्यलोभेन । अपरिहरणीयो महर्षिशापः पुत्रविप्रवासं विना न भवति ।

**भरतः**—अथ तुल्ये पुत्रविप्रवासे कथमहमरण्यं न प्रेषितः ।

---

*Bharata.* Killed? Peace be. And then?

*Sumantra.* Then on seeing him in that condition the sage wept and at the end said, true are his words, 'Just as I do, so thou too shalt perish through grief of son.' (15)

*Bharata.* Sad is this tale.

*Kaikeyī.* Child, on account of this I was put in the wrong, and son Rāma has been sent to the forest, not out of greed for sovereignty. The inevitable curse of the sage will not come to pass without the son's exile.

*Bharata.* The son's exile being the same, why did you not send me to the forest?

---

१. जाद एदण्णिमित्तं अवराहे मं णिक्खिविअ पुत्तओ रामो वणं पेसिदो । ण हु रज्जलोहेण । अपरिहरणीओ महरिसिसावो पुत्तविप्पवासं विणा ण होइ ।



**कैकेयी**—[1]जात, मातुलकुले वर्तमानस्य प्रकृतीभूतस्ते विप्रवासः ।

**भरतः**—अथ चतुर्दश वर्षाणि किं कारणमवेक्षितानि ।

**कैकेयी**—[2]जात, चतुर्दश दिवसा इति वक्तुकामया पर्याकुलहृदयया चतुर्दश वर्षाणीत्युक्तम् ।

**भरतः**—अस्ति पाण्डित्यं सम्यग्विचारयितुम् । अथ विदितमेतद् गुरुजनस्य ।

**सुमन्त्रः**—कुमार, वसिष्ठवामदेवप्रभृतीनामनुमतं विदितं च ।

**भरतः**—हन्त त्रैलोक्यसाक्षिणः खल्वेते । दिष्ट्याऽनपराद्धात्रभवती । अम्ब, यद् भ्रातृस्नेहात् समुत्पन्नमन्युना मया दूषितात्रभवती तत्सर्वं मर्षयितव्यम् । अम्ब, अभिवादये ।

---

*Kaikeyī.* Child, you remained in your maternal uncle's home, and an exile was naturalized with you.

*Bharata.* Then, why did you stipulate for fourteen years?

*Kaikeyī.* Child, I wished to say 'fourteen days,' but my heart being confused, I said 'fourteen years.'

*Bharata.* Wisdom lies in deep deliberation. Is it known to the elders?

*Sumantra.* Prince, it is known to Vasishṭha, Vāmadeva and others and approved of by them.

*Bharata.* Oh! They are indeed witnesses to all the three worlds. Fortunately Her ladyship is free

---

१. जाद माडुलकुले वत्तमाणस्स पइदीहूदो दे विप्पवासो ।

२. जाद चउद्दस दिअस त्ति वत्तुकामाए पय्याउलहिअआए चउद्दस वरिसाणि त्ति उत्तं ।

**कैकेयी**—[1]जात, का नाम माता पुत्रकस्यापराधं न मर्षयति । उत्तिष्ठोत्तिष्ठ । कोऽत्र दोषः ।

**भरतः**—अनुगृहीतोऽस्मि । आपृच्छाम्यत्रभवतीम् । अद्यैवाहमार्यस्य साहाय्यार्थं कृत्स्नं राजमण्डलमुद्योजयामि । अयमिदानीं,

**वेलामिमां मत्तगजान्धकारां**
**करोमि सैन्यौघनिवेशनद्धाम् ।**
**बलैस्तरद्भिश्च नयामि तुल्यं**
**ग्लानिं समुद्रं सह रावणेन ॥ १६ ॥**

अये शब्द इव । तूर्णं ज्ञायतां शब्दः ।

---

from guilt. Mother, I have censured you in anger due to fraternal love. Let all that be pardoned. Mother, I salute.

*Kaikeyī.* Child, which mother will not excuse the fault of her son? Rise, rise. Where is the harm?

*Bharata.* I accept your blessings. I take leave of you. To-day itself I will mobilise the entire host of kings to offer aid to my noble brother.

I will make yonder seashore darkened by proud elephants and studded with arrays of troops. With my troops crossing over to the other side I will inflict an equal deathblow to the Ocean and Rāvaṇa. (16)

Eh! A noise! Quickly find out what it is.

---

१. जाद का णाम मादा पुत्तअस्स अवराहं ण मरिसेदि। उट्ठेहि उट्ठेहि । को एत्थ दोसो ।



(प्रविश्य)

**प्रतिहारी**—[1]जयतु कुमारः । इमं वृत्तान्तं श्रुत्वा ज्येष्ठभट्टिनी मोहं गता ।

**कैकेयी**—हं ।

**भरतः**—कथं मोहमुपगताम्बा ।

**कैकेयी**—[2]एहि जात । आर्यामाश्वासयिष्यावः ।

**भरतः**—यदाज्ञापयत्यम्बा ।

(निष्क्रान्ताः सर्वे । )

षष्ठोऽङ्कः ।

---

(*Entering*)

*Portress.* Greetings, prince. On hearing this news the senior queen has fainted.

*Kaikeyī.* Ha!

*Bharata.* My mother has fainted?

*Kaikeyī.* Come, child. We will console the revered lady.

*Bharata.* As my mother commands.

(*Exeunt Omnes*)

The End of the Sixth Act.

---

१. जेदु कुमारो । इमं वुत्तन्तं सुणिअ जेट्ठभट्टिणी मोहं गआ ।
२. एहि जाद । अय्यं अस्सासइस्सामो ।

# सप्तमोऽङ्कः ।

(ततः प्रविशति तापसः ।)

**तापसः**—नन्दिलक, नन्दिलक ।

(प्रविश्य)

**नन्दिलकः**—[१]आर्य, अयमस्मि ।

**तापसः**—नन्दिलक, कुलपतिर्विज्ञापयति—एष खलु स्वदारापहारिणं त्रैलोक्यविद्रावणं रावणं नाशयित्वा राक्षसगणविरुद्धवृत्तं गुणगणविभूषणं विभीषणमभिषिच्य देवदेवर्षिसिद्धविमलचारित्रां तत्रभवतीं सीतामादाय ऋक्षराक्षसवानरमुख्यैः परिवृतः संप्रा-

ACT THE SEVENTH.

*(Enter* a Hermit)

*Hermit.* Nandilaka, Nandilaka.

*(Entering)*

*Nandilaka.* Sir, here I am.

*Hermit.* Nandilaka, the chief of the hermitage informs—

Rāma has slain Rāvaṇa who abducted his wife and caused panic to the three worlds. He has installed on the throne Vibhīshaṇa, so unlike in character to the hosts of demons and decked by a multitude of virtues. He has taken back the revered Sītā whose

१. अय्य अअं ह्मि ।



प्तस्तत्रभवान् शरद्विमलगगनचन्द्राभिरामो रामः । तदस्मिन्नाश्रमपदेऽस्मद्विभवेन यत्संकल्पयितव्यं तत्सर्वं सज्जीक्रियताम् इति ।

**नन्दिलकः**—[१]आर्य, सर्वं सज्जीकृतम् । किंतु—

**तापसः**—किमेतत् ।

**नन्दिलकः**—[२]अत्र विभीषणसंबन्धिनो राक्षसाः । तेषां भक्षणनिमित्तं कुलपतिः प्रमाणम् ।

**तापसः**—किमर्थम् ।

**नन्दिलकः**—[३]ते खलु खादन्ति ।

pure character was testified to by the gods and divine sages. Surrounded by bears, Rākshasas, monkeys and the like, he, the revered one, delightful like the Moon on the sky clear in autumn, has arrived. Hence let every arrangement according to our means in this hermitage be now made.

*Nandilaka.* Sir, everything is ready, but—

*Hermit.* What is it?

*Nandilaka.* Here are demons belonging to Vibhīshaṇa. As to their food the chief of the hermitage is to decide.

*Hermit.* Why?

*Nandilaka.* They eat men.

१. अय्य सव्वं सज्जीकिदं । किंतु—

२. एत्थ विभीसणकेरआ रक्खसा । तेसं भक्खणणिमित्तं कुळवदी पमाणं ।

३. ते खु खज्जन्ति ।

तापसः—अलमलं संभ्रमेण । विभीषणविधेयाः खलु राक्षसाः ।

नन्दिलकः—[1]नमो राक्षससज्जनाय । (निष्क्रान्तः ।)

तापसः—(विलोक्य) अये, अयमत्रभवान् राघवः । य एषः,

जय नरवर जेयः स्याद् द्वितीयस्तवारि-
स्तव भवतु विधेया भूमिरेकातपत्रा ।
इति मुनिभिरनेकैः स्तूयमानः प्रसन्नैः
क्षितितलमवतीर्णो मानवेन्द्रो विमानात् ॥ १ ॥

जयतु भवान् जयतु । (निष्क्रान्तः ।)

मिश्रविष्कम्भकः ।

---

*Hermit.* Enough of excitement. The Rākshasas, don't you see, are Vibhīshaṇa's servants.

*Nandilaka.* Bow to the virtuous Rākshasa. [*Exit*

*Hermit.* *(Seeing)* Lo! Here is Rāghava, the esteemed.

'Victory to the best of men. May you conquer a second enemy if any. Let the earth be under your sway held under a single umbrella.' Applauded in these terms by numerous sages with pleasure, the lord of men steps down to the Earth from his aerial car. (1)

Glory unto you, glory. [*Exit*

MIXED INTERLUDE.

---

१. णमो रक्खससज्जणाअ ।



(ततः प्रविशति रामः ।)

रामः—भोः ।

समुदितबलवीर्यं रावणं नाशयित्वा
जगति गुणसमग्रां प्राप्य सीतां विशुद्धाम् ।
वचनमपि गुरूणामन्तशः पूरयित्वा
मुनिजनवनवासं प्राप्तवानस्मि भूयः ॥ २ ॥

तापसीनामभिवन्दनार्थमभ्यन्तरं प्रविष्टा चिरायते खलु मैथिली ।
(विलोक्य) अये इयं वैदेही,

सखीति सीतेति च जानकीति
यथावयः स्निग्धतरं स्नुषेति ।
तपस्विदारैर्जनकेन्द्रपुत्री
संभाष्यमाणा समुपैति मन्दम् ॥ ३ ॥

---

*(Enter* Rāma)

*Rāma.* Eh!

Having slain Rāvaṇa of abounding strength and valour and got back the pure Sītā endowed with all good qualities in the world and carried out the bidding of my elders to the very end, I have come back to the residential forest of sages. (2)

Gone inside for saluting the sages' wives, the Mithilā princess tarries long. *(Seeing)* Here is the Videha princess.

The daughter of king Janaka addressed by the sage's wives with words such as 'Friend, Sītā, Jānakī,

(ततः प्रविशति सीता तापसी च ।)

**तापसी**—[1]हला, एष ते कुटुम्बिकः । उपसर्पैनम् । न शक्यं त्वामेकाकिनीं प्रेक्षितुम् ।

**सीता**—[2]हम् । अद्याप्यविश्वसनीयमिव मे प्रतिभाति । (उपसृत्य) जयत्वार्यपुत्रः ।

**रामः**—मैथिलि, अपि जानासि पूर्वाधिष्ठानमस्माकं जनस्थानमासीत् । अप्यत्र ज्ञायन्ते पुत्रकृतका वृक्षाः ।

**सीता**—[3]जानामि जानामि । अवलोकितपत्रका उल्लोकयितव्या इदानीं संवृत्ताः ।

**रामः**—एवमेतत् । निम्नस्थलोत्पादको हि कालः । मैथिलि,

---

daguhter-in-law' according to their age with affection, comes up slowly. (3)

*(Enter* Sītā *and a* Female sage)

*Female sage.* Friend, here is your husband. Go to him. I cannot bear to see you alone.

*Sītā.* Ah! It seems incredible to me even now. *(Going near)* Greetings, my lord.

*Rāma.* Princess of Mithilā, do you remember Janasthāna was our former abode? Do you recognise your adoptive sons, the trees?

*Sītā.* I do. I do. Then they were leafing. Now we have to gaze up to see them.

---

१. हळा एसो दे कुडुम्बिओ । उवसप्प णं । ण सक्कं तुमं एआइणिं पेक्खिदुं ।

२. हं । अज्जवि अविस्ससणीअं विअ मे पडिभादि । (उपसृत्य) जेदु अय्यउत्तो ।

३. जाणामि जाणामि । आळोइअपत्तआ उल्लोअइदव्वा दाणिं संवुत्ता ।



अप्युपलभ्यतेऽस्य सप्तपर्णस्याधस्ताच्छुक्लवाससं भरतं दृष्ट्वा परित्रस्तं मृगयूथमासीत् ।

**सीता**—[1]आर्यपुत्र, दृढं खलु स्मरामि ।

**रामः**—अयं तु नस्तपसः साक्षिभूतो महाकच्छः । अत्रास्माभिरासीनैस्तातस्य निवपनक्रियां चिन्तयद्भिः काञ्चनपार्श्वो नाम मृगो दृष्टः ।

**सीता**—[2]हम् आर्यपुत्र, मा खलु मा खल्वेवं भणितुम् । (भीता वेपते ।)

**रामः**—अलमलं संभ्रमेण । अतिक्रान्तः खल्वेष कालः । (दिशो विलोक्य) अये कुतो नु,

---

*Rāma.* Quite so. Time brings forth ups and downs. Maithilī, do you remember, underneath this Saptaparṇa tree the herd of deer took fright at the sight of Bharata clad in white.

*Sītā.* My lord, I remember it well.

*Rāma.* This is the big tank that witnessed our penance. As we sat here and thought over the observance of the offer of libations to the father the golden-sided deer was sighted.

*Sītā.* Ah my lord! Don't, don't refer to it. *(Shudders with fear)*

*Rāma.* Don't get flurried. That time is past. *(Looking afar)* Eh! What is this?

---

१. अय्यउत्त दिढं खु सुमरामि ।

२. हं अय्यउत्त मा खु मा खु एवं भणिदुं ।

रेणुः समुत्पतति लोध्रसमानगौरः
संप्रावृणोति च दिशः पवनावधूतः ।
शङ्खध्वनिश्च पटहस्वनधीरनादैः
संमूर्च्छितो वनमिदं नगरीकरोति ॥ ४ ॥

(प्रविश्य)

लक्ष्मणः—जयत्वार्यः । आर्य,

अयं सैन्येन महता त्वद्दर्शनसमुत्सुकः ।
मातृभिः सह संप्राप्तो भरतो भ्रातृवत्सलः ॥ ५ ॥

रामः—वत्स लक्ष्मण, किमेवं भरतः प्राप्तः ।

लक्ष्मणः—आर्य, अथकिम् ।

रामः—मैथिलि, श्वश्रूजनपुरोगं भरतमवलोकयितुं विशालीक्रियतां ते चक्षुः ।

---

Dust rises high, reddish like the Lodhra blossom. Wafted by the wind, it spreads over the quarters. The sound of conch augmented by the loud beats of drums converts this forest into a city. (4)

(*Entering*)

*Lakshmaṇa.* Greetings, sir.

Bharata, fond of his brothers, eager to see you has come along with our mothers, followed by a big army. (5)

*Rāma.* Dear Lakshmaṇa, Bharata has come?

*Lakshmaṇa.* Yes, sir.

*Rāma.* Mithilā princess, open your eyes wide to look at Bharata preceding your mothers-in-law.



सीता—[1]आर्यपुत्र, एष्टव्ये काले भरत आगतः ।

(ततः प्रविशति भरतः समातृकः । )

भरतः—

तैस्तैः प्रवृद्धविषयैर्विषमैर्विमुक्तं
मेघैर्विमुक्तममलं शरदीव सोमम् ।
आर्यासहायमहमद्य गुरुं दिदृक्षुः
प्राप्तोऽस्मि तुष्टहृदयः स्वजनानुबद्धः ॥ ६ ॥

रामः—अम्बाः, अभिवादये ।

सर्वाः—[2]जात, चिरं जीव । दिष्ट्या वर्धामहे अवसितप्रतिज्ञं त्वां कुशलिनं सह वध्वा प्रेक्ष्य ।

---

*Sītā.* My lord, Bharata has come at a welcome season.

(*Enter* Bharata *with the* mothers)

*Bharata.* I have come with a pleased heart, followed by my kinsmen, keen to see my master in the company of the revered lady, safe from the ordeals that overtook him in succession like the clear moon in autumn relieved of clouds. (6)

*Rāma.* Mothers, I salute you.

*All the queens.* Child, may you live long. We are fortunate in seeing you along with your spouse safe at the end of your vow.

---

१. अय्यउत्त इच्छिदव्वे काले भरदो आअदो ।

२. जाद चिरं जीव । दिट्ठिआ वड्ढामो अवसिदपडिण्णं तुमं कुसलिणं सह वहूए पेक्खिअ ।

**रामः**—अनुगृहीतोऽस्मि ।

**लक्ष्मणः**—अम्बाः, अभिवादये ।

**सर्वाः**—[1]जात, चिरं जीव ।

**लक्ष्मणः**—अनुगृहीतोऽस्मि ।

**सीता**—[2]आर्याः, वन्दे ।

**सर्वाः**—[3]वत्से, चिरमङ्गला भव ।

**सीता**—[4]अनुगृहीतास्मि ।

**भरतः**—आर्य, अभिवादये भरतोऽहमस्मि ।

**रामः**—एह्येहि वत्स इक्ष्वाकुकुमार । स्वस्ति । आयुष्मान् भव ।

**वक्षः प्रसारय कवाटपुटप्रमाण-**
**मालिङ्ग मां सुविपुलेन भुजद्वयेन ।**

*Rāma.* I accept your blessings.

*Lakshmaṇa.* Mothers, I salute you.

*All the queens.* Child, may you live long.

*Lakshmaṇa.* I receive your blessings.

*Sītā.* Mothers, I bow to you.

*All the queens.* Child, may you live long and happy.

*Sītā.* I am favoured.

*Bharata.* Sir, I am Bharata. I bow to you.

*Rāma.* Child, come, come. Ikshvāku prince, happiness be to you. May you live long.

Stretch afar your breast broad like a door-panel.

१. जाद चिरं जीव । २. अय्या वन्दामि ।
३. वच्छे चिरमङ्गळा होहि । ४. अणुग्गहिदह्मि ।



**उन्नामयाननमिदं शरदिन्दुकल्पं**
**प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥ ७ ॥**

**भरतः**—अनुगृहीतोऽस्मि । आर्ये, अभिवादये भरतोऽहमस्मि ।

**सीता**—[1]आर्यपुत्रेण चिरसंचारी भव ।

**भरतः**—अनुगृहीतोऽस्मि । आर्य, अभिवादये ।

**लक्ष्मणः**—एह्येहि वत्स । दीर्घायुर्भव । परिष्वजस्व गाढम् । (आलिङ्गति ।)

**भरतः**—अनुगृहीतोऽस्मि । आर्य, प्रतिगृह्यतां राज्यभारः ।

**रामः**—वत्स, कथमिव ।

**कैकेयी**—[2]जात, चिराभिलषितः खल्वेष मनोरथः ।

Embrace me with both your mighty arms. Lift your face that resembles the autumn moon. Delight my body scorched by reverses. (7)

*Bharata.* I thank you. Madam, I salute you. I am Bharata.

*Sītā.* May you long be in association with my lord.

*Bharata.* I thank you. Sir, I bow to you.

*Lakshmaṇa.* Come, come, child. May you live long. Embrace me tight. *(Embraces)*

*Bharata.* I am favoured. Sir, accept the burden of the state.

*Rāma.* Why so, my boy?

*Kaikeyī.* My boy, it has been my long cherished dream.

१. अय्यउत्तेण चिरसञ्चारी होहि । २. जाद चिराहिलसिदो खु एसो मणोरहो ।

(ततः प्रविशति शत्रुघ्नः ।)

**शत्रुघ्नः**—

**विविधैर्व्यसनैः क्लिष्टमक्लिष्टगुणतेजसम् ।**
**द्रष्टुं मे त्वरते बुद्धी रावणान्तकरं गुरुम् ॥ ८ ॥**

(उपगम्य) आर्य, शत्रुघ्नोऽहमभिवादये ।

**रामः**—एह्येहि वत्स । स्वस्ति आयुष्मान् भव ।

**शत्रुघ्नः**—अनुगृहीतोऽस्मि । आर्ये, अभिवादये ।

**सीता**—[1]वत्स, चिरं जीव ।

**शत्रुघ्नः**—अनुगृहीतोऽस्मि । आर्य, अभिवादये ।

**लक्ष्मणः**—स्वस्ति । आयुष्मान् भव ।

---

(*Enter* Śatrughna)

*Śatrughna.* My heart yearns to see Rāvaṇa's slayer, my revered brother, hard pressed by a number of reverses, abounding in virtues soft and valour formidable. (8)

*(Approaching)* Sir, I salute you. I am Śatrughna.

*Rāma.* Come, my boy. Happiness be to you. May you live long.

*Śatrughna.* I accept the blessings. Madam, I bow to you.

*Sītā.* Child, may you live long.

*Śatrughna.* I receive your blessings. Sir, I salute you.

*Lakshmaṇa.* Weal unto you. May you live long.

---

१. वच्छ चिरं जीव ।



**शत्रुघ्नः**—अनुगृहीतोऽस्मि । आर्य, एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य त्वद्दर्शनमभिलषतः ।

**तीर्थोदकेन मुनिभिः स्वयमाहृतेन**
**नानानदीनदगतेन तव प्रसादात् ।**
**इच्छन्ति ते मुनिगणाः प्रथमाभिषिक्तं**
**द्रष्टुं मुखं सलिलसिक्तमिवारविन्दम् ॥ ९ ॥**

**कैकेयी**—[1]गच्छ जात । अभिलषाभिषेकम् ।

**रामः**—यदाज्ञापयत्यम्बा । (निष्क्रान्तः ।)

(नेपथ्ये)

जयतु भवान् । जयतु स्वामी । जयतु महाराजः । जयतु देवः । जयतु भद्रमुखः । जयत्वार्यः । जयतु रावणान्तकः ।

---

*Śatrughna.* I thank you. Sir, here Vasishṭha and Vāmadeva along with the ministers with coronation-gear in hand, desire to meet you.

These sages wish to see your face bathed anew with holy waters brought from many a river and stream by the sages themselves through your grace like a lotus bedewed with water. (9)

*Kaikeyī.* Go, my child. Receive the consecration.

*Rāma.* As my mother commands. [*Exit*

*(Behind the scenes)*

Glory to you. Glory to the master. Glory to Your Majesty. Glory to the king. Glory to the happy one. Glory to the Honoured one. Glory to the slayer

---

१. गच्छ जाद । अभिलसेहि अभिसेअं ।

**कैकेयी**—[1]एते पुरोहिताः कञ्चुकिनः पुत्रकस्य मे विजयघोषं वर्धयन्त आशीर्भिः पूजयन्ति ।

**सुमित्रा**—[2]प्रकृतयः परिचारकाः सज्जनाश्च पुत्रकस्य मे विजयं वर्धयन्ति ।

( नेपथ्ये )

भो भो जनस्थानवासिनस्तपस्विनः, श्रृण्वन्तु श्रृण्वन्तु भवन्तः ।

हत्वा रिपुप्रभवमप्रतिमं तमौघं
सूर्योऽन्धकारमिव शौर्यमयैर्मयूखैः ।
सीतामवाप्य सकलाशुभवर्जनीयां
रामो महीं जयति सर्वजनाभिरामः ॥ १० ॥

of Rāvaṇa.

*Kaikeyī.* Here the priests and chamberlains shout cries of victory at my son and felicitate him with blessings.

*Sumitrā.* The ministers, servants and gentlemen proclaim the victory of my son.

*(Behind the scenes)*

Ye sages resident of Janasthāna! Hear, hear.

Having dispelled the unparalleled mass of darkness sprung from his foe with the rays of his valour as the Sun would drive out darkness and having got back Sītā free from all unhappy traits, Rāma, the delight of all the people, stands glorious on Earth. (10)

१. एदे पुरोहिदा कञ्चुइणो पुत्तअस्स मे विजअघोसं वड्ढअन्तो आसीहि पूजअन्ति। २. पइदीओ परिचारआ सज्जणा अ पुत्तअस्स मे विजअं वड्ढअन्ति ।



**कैकेयी**—[1]अम्महे, पुत्रस्य मे विजयघोषणा वर्धते ।

( ततः प्रविशति कृताभिषेको रामः सपरिवारः । )

**रामः**—( विलोक्याकाशे ) भोस्तात,

स्वर्गेऽपि तुष्टिमुपगच्छ विमुञ्च दैन्यं
कर्म त्वयाभिलषितं मयि यत् तदेतत् ।
राजा किलास्मि भुवि सत्कृतभारवाही
धर्मेण लोकपरिरक्षणमभ्युपेतम् ॥ ११ ॥

**भरतः**—

अधिगतनृपशब्दं धार्यमाणातपत्रं
विकसितकृतमौलिं तीर्थतोयाभिषिक्तम् ।
गुरुमधिगतलीलं वन्द्यमानं जनौघै-
र्नवशशिनमिवार्यं पश्यतो मे न तृप्तिः ॥ १२ ॥

*Kaikeyī.* Ah good! The paean of my son's victory rises high.

*(Enter* Rāma *crowned as king along with retinue)*

*Rāma.* *(Looking up the sky)* O father,

Be now content at least in heaven. Leave off your depression. What you wished for me has come to pass. I am now king on earth, bearing an honourable burden. The protection of the world according to Dharma has been undertaken by me. (11)

*Bharata.* I do not reach the end of contentment at the sight of my revered senior like the crescent-moon, dubbed with the title of king, with umbrella

१. अम्महे पुत्तस्स मे विजअघोसणा वड्ढइ ।

**शत्रुघ्नः**—

**एतदार्याभिषेकेण कुलं मे नष्टकल्मषम् ।**
**पुनः प्रकाशतां याति सोमस्येवोदये जगत् ॥ १३ ॥**

**रामः**—वत्स लक्ष्मण, अधिगतराज्योऽहमस्मि ।

**लक्ष्मणः**—दिष्ट्या भवान् वर्धते ।

(प्रविश्य)

**काञ्चुकीयः**—जयतु महाराजः । एष खलु तत्रभवान् विभीषणो विज्ञापयति । सुग्रीवनीलमैन्दजाम्ववद्धनूमत्प्रमुखाश्चानुगच्छन्तो विज्ञापयन्ति—दिष्ट्या भवान् वर्धत इति ।

**रामः**—सहायानां प्रसादाद्वर्धत इति कथ्यताम् ।

---

held over him, and head shining with the crown and consecrated with holy waters, in the height of splendour and adored by myriads of men. (12)

*Śatrughna.* By this coronation of my brother my family emerges again into brilliance, free from all stain like the world at the rise of the moon. (13)

*Rama.* Dear Lakshmaṇa, I have acquired sovereignty.

*Lakshmaṇa.* I congratulate you.

*(Entering)*

*Chamberlain.* Greetings, Your Majesty. The respected Vibhīshaṇa sends word. Sugrīva, Nīla, Mainda, Jāmbavān, Hanūmān and the other followers send you their greetings—'Thank god. You have risen in glory.'



**काञ्चुकीयः**—यदाज्ञापयति महाराजः ।

**कैकेयी**—[1]धन्या खल्वस्मि । इममभ्युदयमयोध्यायां प्रेक्षितुमिच्छामि ।

**रामः**—द्रक्ष्यति भवती । (विलोक्य) अये प्रभाभिर्वनमिदमखिलं सूर्यवत्प्रतिभाति । (विभाव्य) आ ज्ञातम् । संप्राप्तं पुष्पकं दिवि रावणस्य विमानम् । कृतसमयमिदं स्मृतमात्रमुपगच्छतीति । तत्सर्वैरारुह्यताम् ।

(सर्वे आरोहन्ति ।)

**रामः**—

**अद्यैव यास्यामि पुरीमयोध्यां**
**संबन्धिमित्रैरनुगम्यमानः ।**

---

*Rāma.* Say, 'Risen through the help of my associates.'

*Chamberlain.* As Your Majesty commands.

*Kaikeyī.* I am fortunate. I wish to see this festivity at Ayodhyā.

*Rāma.* You will see. *(Seeing)* Eh! The whole forest shines in brightness like the Sun. *(Reflecting)* I see the Pushpaka, the aerial car of Rāvaṇa, has come up on the sky. It had bound itself to be present at the mere thought. Let all mount it.

*(All mount the chariot)*

*Rāma.* I will at once go to the city of Ayodhyā, followed by my kinsmen and friends.

---

१. धण्णा खु ह्मि । इदं अब्भुदअं अओज्झाअं पेक्खिदुं इच्छामि ।

लक्ष्मणः—

अद्यैव पश्यन्तु च नागरास्त्वां
चन्द्रं सनक्षत्रमिवोदयस्थम् ॥ १४ ॥

(भरतवाक्यम् ।)

यथा रामश्च जानक्या बन्धुभिश्च समागतः ।
तथा लक्ष्म्या समायुक्तो राजा भूमिं प्रशास्तु नः ॥ १५ ॥

(निष्क्रान्ताः सर्वे ।)

सप्तमोऽङ्कः ।

प्रतिमानाटकं समाप्तम् ॥

---

*Lakshmaṇa.* Let the citizens look at you now in your ascendancy as at the Moon risen out with stars.

*(Stage-benediction)*

As Rāma was united with Jānakī and kinsmen, so may our king be united with Fortune and rule over the Earth. (15)

*(Exeunt Omnes)*

The End of the Seventh Act.

The End of the Play.